सहोत्क्रामतः' इति । ब्रह्मपरिग्रहे तु किं कस्माद्विद्येत । तस्मादिह जीवमुख्यप्राणयोरन्य वा प्रतीयेयातां न ब्रह्मेति चेत्, नैतदेवं, उपासात्रैविध्यात् । एवं सति त्रिविधमुपासनं जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति । नचैतदेकस्मिन्वाक्येऽभ्युपगन्तुं युक्तम् मोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते । 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्र मामायुरमृतमित्युपास्स्व' इत्युक्त्वान्ते 'स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' पावुपक्रमोपसंहारौ दृश्येते । तत्रार्थैकत्वं युक्तमाश्रयितुम् । नच ब्रह्मलिङ्गमन्यपरत्वेन प क्यम् । दशानां भूतमात्राणां प्रज्ञामात्राणां च ब्रह्मणोऽन्यत्रार्पणानुपपत्तेः । आश्रितत्वा पि ब्रह्मलिङ्गवशात्प्राणशब्दस्य ब्रह्मणि प्रवृत्तेः । इहापि च हिततमोपन्यासादिब्रह्मलिङ्गो पदेश एवायमिति गम्यते । यत्तु मुख्यप्राणलिङ्गं दर्शितम्—'इदं शरीरं परिगृह्योत्थापय तदसत् । प्राणव्यापारस्यापि परमात्मायत्तत्वात्परमात्मन्युपचरितुं शक्यत्वात् । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' ( काठ० ५ श्रुतेः । यदपि 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि जीवलिङ्गं दर्शितं तदपि निवारयति । नहि जीवो नामात्यन्तभिन्नो ब्रह्मणः, 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादि बुद्ध्याद्युपाधिकृतं तु विशेषमाश्रित्य ब्रह्मैव सञ्जीवः कर्ता भोक्ता चेत्युच्यते । तस्यो

रत्नप्रभाव्याख्या

जीवमुख्यप्राणयोर्लिङ्गादुपास्यत्वं तर्हि ब्रह्मणोऽपि लिङ्गानामुक्तत्वादुपासनं स्यात् । न चेष्टापत्तिः । उपक्रम कवाक्यताभङ्गप्रसङ्गादित्याह—**नैतदेवमित्यादिना** । नच स्वतन्त्रपदार्थभेदाद्वाक्यभेदः किं न स्यादिति मुख्यप्राणयोरुक्तलिङ्गानां ब्रह्मणि नेतुं शक्यतया स्वातन्त्र्यासिद्धेः, अफलपदार्थस्य फलवद्वाक्यार्थशेषत्वेन प्र नुसारेण तल्लिङ्गनयनस्योचितत्वाच्च । नहि प्रधानवाक्यार्थब्रह्मलिङ्गमन्यथा नेतुं शक्यं, न वा तदुक्ति ब्रह्मलिङ्गमिति । सूत्रशेषं व्याचष्टे—**आश्रितत्वाच्चेति** । अन्यत्र 'अत एव प्राणः' इत्यादौ वृत्तेराश्रित ब्रह्मलिङ्गस्य योगाद्ब्रह्मपर एव प्राणशब्द इत्यर्थः । प्राणादिलिङ्गानि सर्वात्मके ब्रह्मण्यनायासेन नेतुं शक्यानि त्यादिना । यस्मिन्नेतौ प्रेर्यत्वेन स्थितौ तेनेतरेण ब्रह्मणा सर्वे प्राणादिव्यापारं कुर्वन्तीत्यर्थः । विशे

भामतीव्याख्या

**दिति** । प्राणान्तराणीन्द्रियाणि, तानि हि मुख्ये प्राणे प्रतिष्ठितानि । जीवमुख्यप्राणयोरन्यतर इत्युपक्रममात्र पूर्वपक्षतत्त्वम् । ब्रह्म तु ध्रुवम् । **न ब्रह्मेति** । न ब्रह्मैवेत्यर्थः । **दशानां भूतमात्राणामिति** । पञ्च शब्दा व्यादय इति दश भूतमात्राः । पञ्च बुद्धीन्द्रियाणि पञ्च बुद्धय इति दश प्रज्ञामात्राः । तदेवं स्वमतेन व्याख्याय

आनन्दगिरीयव्याख्या

**वा इति** । भेदनिर्देशमाह—**सहेति** । ब्रह्मपक्षेऽप्यभेदोपपत्तिमाशङ्क्याङ्गीकृत्य भेदानुपपत्तिमाह—**ब्रह्मेति** । अनु योगं नेयानीत्युपसंहरति—**तस्मादिति** । इहेति प्रकृतसंदर्भोक्तिः । अन्यतर इत्युपक्रममात्रं, उभाविति तत्त्वम् । दिग्धतेरावश्यकम् । न ब्रह्मेति तन्मात्रव्यावृत्तिः । तथाच जीवमुख्यप्राणब्रह्मणां यथायथमुपास्तिरिष्टा । नच 'प्रा माद् 'स एष प्राण एव' इत्युपसंहाराच्च वाक्यैक्यावगतेरेकार्थत्वं, वाक्यार्थावगमस्य पदार्थावगमजन्यत्वेनोपजीव्य सर्वत्र वाक्यार्थभङ्गः, गुणप्रधानभूतपदार्थधियो वाक्यार्थैक्याविरोधित्वात् । अत्र तु पदार्थानां स्वातन्त्र्यं, नैकवाक्यतेति मवतार्य व्याचष्टे—**नैतदिति** । अस्तूपास्तित्रैविध्यं, नेत्याह—**नचेति** । अर्थभेदे वाक्यभेदात्कथं सिद्धवदेकवाक्य उपक्रमेति । तदेव स्फुटयति—**मामेवेति** । वाक्यैक्येऽपि किमित्यर्थभेदो न स्यात्, तत्राह—**तत्रेति** । पदार्थधियो वाक्यार्थबोधस्योद्देश्यत्वेन प्राधान्यात्पदानां पदार्थबोधे फले पर्यवसानाभावात्तस्य नान्तरीयकत्वात्प्रधानीभूतवाक्य करूप्यावगतस्य युक्तमैक्यमिति भावः । उपासनात्रैविध्यनिरासाय ब्रह्मलिङ्गं जीवादिविषयं नेयमित्याशङ्क्याह—**नचेति** । दयः पञ्च पृथिव्यादयश्च दश भूतमात्राः । पञ्च बुद्धीन्द्रियाणि पञ्च बुद्धय इति दश प्रज्ञामात्राः । यद्वा ज्ञानेन्द्रियार्थाः र्थाश्च पञ्चेति दश भूतमात्राः, द्विविधानीन्द्रियाणि प्रज्ञामात्रा दशेति भावः । प्राणशब्दस्य ब्रह्मण्यवृत्तेस्त्रैविध्यं तथापि **आश्रितत्वाच्चेति** । तत्र ब्रह्मलिङ्गाद्ब्रह्मणि वृत्तिराश्रिता प्रकृते कथमित्याशङ्क्याह—**इहापीति** । प्राणस्य ब्रह्मत्वे रुध्येतेत्याशङ्क्याह—**यत्त्विति** । प्राणव्यापारस्य परमात्मायत्तत्वे मानमाह—**नेति** । कारणस्य कार्याकारेण स्थितस्य बन्धात्कार्यस्य व्यावृत्तस्य कार्यान्तरेष्वपि स्थितकारणधर्मेणासंबन्धात्प्राणादिलिङ्गानि ब्रह्मणि युज्यन्ते, न तल्लिङ्गानि लिङ्गमपि ब्रह्मविरोधीत्यनुवादपूर्वकमाह—**यदपीति** । कथं तर्हि ब्रह्मण एव सतो जीवस्य संसारित्वं, तत्राह—**बुद्ध्या**

वेशेषपरित्यागेन स्वरूपं ब्रह्म दर्शयितुं 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादिना प्रत्यगात्माभिमुखीकरणार्थमुपदेशो न विरुध्यते। 'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥' (के० १।४) इत्यादि च श्रुत्यन्तरं वचनादिक्रियाव्यापृतस्यैवात्मनो ब्रह्मत्वं दर्शयति। यत्पुनरेतदुक्तम्—'सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतः' इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादे नोपपद्यत इति। नैष दोषः। ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्भेदनिर्देशोपपत्तेः। उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः प्राण एव प्रज्ञात्मेत्येकीकरणमविरुद्धम्। अथवा 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इत्यस्यायमन्योऽर्थः—न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते । कथम्, उपासात्रैविध्यात् । त्रिविधमिह ब्रह्मोपासनं विवक्षितं, प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च । तत्र 'आयुरमृतमुपास्स्वायुः प्राणः' इति, 'इदं शरीरं परिगृह्योत्थापयति' इति, 'तस्मादेतदेवोक्थमुपासीत' इति च प्राणधर्मः । 'अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकीभवन्ति तद्व्याख्यास्यामः' इत्युपक्रम्य 'वागेवास्या एकमङ्गमदूदुहत्तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा

रत्नप्रभाव्याख्या

मित्यर्थः। 'वक्तारं विद्यात्' इति न वक्तुर्ज्ञेयत्वमुच्यते, तस्य लोकसिद्धत्वात्, किंतु तस्य ब्रह्मत्वं बोध्यते। तद्बोधाभिमुख्य लिङ्गादय इत्यत्र श्रुत्यन्तरमाह—यद्वाचेति। येन चैतन्येन वागभ्युद्यते स्वकार्याभिमुख्येन प्रेर्यते तदेव वागागम्यं ब्रह्मेत्यर्थः। तत्त्वंपदवाच्ययोः स्वरूपतो भेदस्ताभ्यामुपलक्ष्यात्मस्वरूपाभेदादेकत्वं निर्दिश्यत इत्याह—नैष दोष । स्वमतेन सूत्रं व्याख्याय वृत्तिकृन्मतेन व्याचष्टे—अथवेति । उपासनात्रित्वप्रसङ्गादिति पूर्वमुक्तम् । अत्र कारकस्यैकब्रह्मविशेष्यकस्यैकस्योपासनस्य विवक्षितत्वादित्यर्थः। अतो न वाक्यभेद इति भावः । देहचेष्टात्मकजीवनं प्राणस्यायुष्ट्वं, देहापेक्षया तस्य आमुक्तेरवस्थानादमृतत्वं, उत्थापयतीत्युक्थत्वमिति प्राणधर्मः। जीवधर्मानाह—अथेति। प्राणयोः सहस्थित्युत्क्रान्त्युक्त्यनन्तरमित्यर्थः। अत्र प्रज्ञापदेन साभासा जीवाख्या बुद्धिरुच्यते। तस्याः संबन्धीनि सर्वाणि भूतानि यथैकं भवन्त्यधिष्ठानचिदात्मना तथा व्याख्यास्याम इत्युपक्रम्योक्तम्—'वागेव' इत्यादि। चक्षुरेवास्या अङ्गमदूदुहदित्यादिपर्यायाणां संक्षिप्तार्थ उच्यते। उत्पन्नाया असत्कल्पायाः साभासबुद्धेर्नामप्रपञ्चविषयित्वमर्धं शरीरम् । आत्मकरूपप्रपञ्चविषयित्वमर्धं शरीरमिति मिलित्वा विषयित्वाख्यं पूर्णं शरीरमिन्द्रियसाध्यम्। तत्र कर्मेन्द्रियेषु वागेवास्याः या एकमङ्गं देहार्धमदूदुहत् पूरयामास। वागिन्द्रियद्वारा नामप्रपञ्चविषयित्वं बुद्धिर्लभत इत्यर्थः। चतुर्थी षष्ठ्यर्थां। तस्याः नाम किल चक्षुरादिना प्रतिविहिता ज्ञापिता भूतमात्रा रूपाद्यर्थरूपा परस्तादपरार्धे कारणं भवति। ज्ञानकरणद्वारार्थप्रपञ्चविषयित्वं बुद्धिः प्राप्नोतीत्यर्थः। एवं बुद्धेः सर्वार्थद्रष्टृत्वमुपपाद्य तन्निष्ठचित्प्रतिबिम्बद्वारा साक्षिणि द्रष्टृत्वाध्यासमाह—प्रज्ञयेति।

भामतीव्याख्या

व्याचष्टे—अथवेति। पूर्वं प्राणस्यैकमुपासनमपरं जीवस्यापरं ब्रह्मण इत्युपासनात्रैविध्येन वाक्यभेदप्रसक्तो दूषणमुक्तम्। इह

आनन्दगिरीयव्याख्या

चेन्न तस्य वक्तृत्वं, तस्य ब्रह्मत्वविरोधित्वात्, तत्राह—तस्येति । 'वक्तारं विद्यात्' इति न विधिः, वक्तृत्वस्याध्यक्षत्वात्। किंतु शेनाप्रसिद्धं ब्रह्मत्वं विधित्सितमित्यर्थः। प्रत्यगात्माभिमुख्योऽर्थो लिङ्गादिरिति समन्वयसूत्रेऽपि दर्शितमित्याशयेनाह—प्रत्यगिति । तलवकारश्रुतिमाह—यद्वाचेति। येन चैतन्येन वागभ्युद्यते प्रेर्यते वदनसामर्थ्यमापाद्यते तदेव वागादेरगम्यं ब्रह्मेत्यर्थः । तस्य र्थमाह—वचनादीति। द्विवचनसहभावोत्क्रमणश्रवणं सिद्धान्ते दुर्योजमित्युक्तमनूद्य दूषयति—यद्वित्यादिना । उपाधिभेदात्तष्टस्य भिन्नतेति विशिनष्टि—प्रत्यगिति। अभेदस्तर्हि कथं, तत्राह—उपाधीति । उपहितद्वारोपलक्षितस्येत्यर्थः । स्वमते मुख्या व्याख्याय वृत्तिकारमते व्याकरोति—अथवेति । तत्र नञर्थमाह—नेति । ब्रह्मवाक्यत्वे जीवप्राणयोरध्येयत्वात्तल्लिङ्गविरोधो त्याह—कथमिति। हेतुमुक्त्वा व्याख्याति—उपासेति । स्वतन्त्राणां त्रयाणामुपास्तौ वाक्यभेदः, न त्वेकस्यैव ब्रह्मणस्त्रङ्भेगे । उक्तमेव विभजते—तत्रेति। 'प्राणो हि भूतानामायुः' इति श्रुत्यन्तरेणाह—आयुरिति । तस्यायुष्ट्वं जीवनस्य तदधीन । प्राणस्यैव देहादुत्थापकत्वं तस्मादित्युच्यते। उत्थापयति देहादीत्युक्थं प्राणः । सहवासः सहोत्क्रान्तिश्चेत्युक्त्यानन्तर्यमथशब्दार्थः । जीवाख्यप्रज्ञायाः संबन्धीनि भूत्वा सर्वाणि भूतानि तद्दृश्यत्वेन कल्पितानि वस्तुतो यथैकं भवन्ति तथा तद्वस्तु व्याख्यास्याम क्रम्योक्तम्—'वागेव' इत्यादि। बुद्धेः साभासायाः स्वरूपतो आत्मत्वेऽपि विषयित्वमिन्द्रियसाध्यम्। तत्र कर्मेन्द्रियेषु मध्ये वागेवास्याः या देहार्धमेकमङ्गमदूदुहद्विनिर्वर्तितवती पूरयामास । नामरूपात्मा प्रपञ्चो विषयस्तत्र नामप्रपञ्चं वाग्द्वारा प्रविष्टा धीस्तं प्रति विषयित्वार्थः। तस्याः प्रज्ञायाः पुनर्नाम किल परस्तादपरभागे चक्षुरादिना प्रतिविहिता समुत्थापिता भूतमात्रा रूपादिरूपा चक्षुरादिनार्पणेन बुद्धेरपरभागत्वं रूपप्रपञ्चं प्रति विषयित्वं निर्वर्तेन इत्याह—तस्या इति । बुद्ध्युपहितचैतन्यद्वारा स्वरूपे द्रष्टृत्वाध्यास-

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति' इत्यादिः प्रज्ञाधर्मः। 'ता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम्। यद्धि भूतमात्रा न स्युर्न प्र स्युः। यद्धि प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः। न ह्यन्यतरतो रूपं किंचन सिध्ये एतन्नाना। तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्र स्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा' इत्यादिर्ब्रह्मधर्मः। तस एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितम्। अन्यत्रापि 'मनोमय शरीरः' (छा० ३।१४।२) इत्यादावुपाधिधर्मेण ब्रह्मण उपासनमाश्रितम्। इहापि तदु क्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वावगमात्प्राणप्रज्ञाब्रह्मलिङ्गावगमाच्च। तस्माद्ब्रह्मवाक्यं

### रत्नप्रभाव्याख्या

बुद्धिद्वारा चिदात्मा वाचमिन्द्रियं समारुह्य तस्याः प्रेरको भूत्वा वाचा करणेन सर्वाणि नामानि वक्तव्यत्वेन सर्वाणि रूपाणि पश्यतीत्येवं द्रष्टा भवतीत्यर्थः। तथाच सर्वद्रष्टृत्वं चिदात्मनि द्रष्टृत्वाध्यासनिमित्तत्वं च बुद्धेर्धर्मं सर्वाधारत्वानन्दत्वादिः ब्रह्मधर्म इत्याह—ता वा इति। दशत्वं व्याख्यातम्। प्रज्ञा इन्द्रियजातस्ता अधिकृत्य वर्तन्ते, प्रज्ञामात्रा इन्द्रियाणि ग्राह्यं भूतजातमधिकृत्य वर्तन्त इति ग्राह्यग्राहकयोर्मिथः सापेक्षत्वमुक्तं साधयति— तदेव स्फुटयति—न हीति। ग्राह्येण ग्राह्यस्वरूपं न सिध्यति किंतु ग्राहकेण। एवं ग्राहकमपि ग्राह्यमनपेक्ष्य तस्मात्सापेक्षत्वादेतद्ग्राह्यग्राहकद्वयं वस्तुतो न भिन्नं किंतु चिदात्मन्यारोपितमित्याह—नो इति। तद्यथेत्यादि सूत्रार्थमुपसंहरति—तस्मादिति। अन्यधर्मेणान्यस्योपासनं कथमित्याशङ्क्याश्रितत्वादित्याह—अन्यत्रापीति। तत् अन्यधर्मेणोपासनम्। इयमसंगता व्याख्या। तथाहि—न तावदारुण्याद्यनेकगुणविशिष्टप्राप्तक्रयणवदुपासात्रयं ब्रह्मणो विधिः संभवति, सिद्धस्य विध्यनर्हत्वात्। नापि ब्रह्मानुवादेनोपासात्रयविधिः, वाक्यभेदात्। नच नानाधर्मै सनं विधीयत इति वाच्यं, तादृशविधिवाक्यस्यात्राश्रवणात्। नच 'तं मामायुरमृतमित्युपास्व' इत्यत्र मामिति प्राणेन, अमृतमिति ब्रह्मणा स्वस्वधर्मवता विशिष्टोपासनाविधिरिति वाच्यं, सर्वेषां धर्माणामश्रवणात्, ब्रह्माश्रुते अमृतम्' इति प्राणस्यैवामृतत्वश्रुतेः। अत उपासनाविधिलुब्धेन 'वक्तारं विद्यात्' 'एतदेवोक्थमुपासीत' विद्यात्' इति जीवप्राणब्रह्मोपासनविधयः, अन्ये गुणविधय इति स्वीकृत्यैकवाक्यत्वं त्याज्यं, तच्चायुक्तं, उपक्रमादि

### भामतीव्याख्या

तु ब्रह्मण एकस्यैवोपासात्रयविशिष्टस्य विधानाच्च वाक्यभेद इत्यभिमानः प्राचां वृत्तिकृताम्। तदेतदालोचनीयं कथं न युक्तं 'सोमेन यजेत' इत्यादौ सोमादिगुणविशिष्टयागविधानं, तद्गुणविशिष्टस्यापूर्वस्य कर्मणोऽप्राप्तस्य विधिविषयत्वात्। ब्रह्म न विधिविषयो भवितुमर्हति, अभावार्थत्वात्। भावार्थस्य विधिविषयत्वनियमात्। वाक्यान्तरेभ्यश्च ब्रह्मावगतेः

### आनन्दगिरीयव्याख्या

माह—प्रज्ञयेति। तया द्वारा चिदात्मा वाचं करणं प्रति कर्तृत्वाध्यासमनुभूय वाचा करणेन सर्वाणि नामानि वक्तव्यत्वेन सर्वाणि रूपाणि पश्यतीत्येवं द्रष्टृत्वमनुभवतीत्यर्थः। सर्वभूतविषयित्वमात्मनि विशिष्टद्रष्टृत्वादिकरत्वं च बुद्धेर्धर्म इत्युक्त्वानन्दत्वादि ब्रह्मधर्म इत्याह—ता वा एता इति। उक्ता भूतमात्राः प्रज्ञाशब्दितेन्द्रियाणि तदुत्थज्ञानानि चाधिकृत्य प्रज्ञामात्राश्चोक्ता भूतशब्दितानि पृथिव्यादीनि शब्दादीनि चाधिकृत्य भवन्ति। ग्राह्यग्राहकयोर्मिथः सापेक्षकत्वं साधयति— स्पष्टयति—नहीति। अन्योन्यापेक्षमप्येतद्विषयविषयिद्वयं न द्वैतपक्षवन्नाना वस्तुतो भिन्नं किंत्वेकस्मिन्नेवारोपितमित्याह— तद्यथेत्यादि व्याख्यातम्। नोपासात्रैविध्यादित्यस्यार्थमुपसंहरति—तस्मादिति। अन्यधर्मेणान्यस्योपासनं कथमित्या त्याह—अन्यत्रापीति। तत्रोपक्रमे ब्रह्मणः श्रुतत्वायुक्ता मनोमयत्वादिविशिष्टस्योपास्तिः, इह कथमित्याशङ्क्य तथोक्ता पीति। उपास्तेस्तर्हि कथं त्रैविध्यं, तत्राह—प्राणेति। वाक्यभेदस्तु ब्रह्मण एकस्यैवोपासात्रैविध्योक्त्या प्रत्युक्तः। शिष्टं ब्रह्म विधेयमुत ब्रह्मविशिष्टमुपासात्रयं किं वा तदनुवादेन तदाश्रित्योपासात्रयम्। नाद्यः, ब्रह्मणः सिद्धत्वाद्विध्यनर्हत्वा वाक्यान्तरेभ्यो ब्रह्मणो ज्ञातत्वात्। न तृतीयः, ब्रह्मानुवादेनोपास्तिविधावेकविशेष्यावशीकारादुपास्तीनां मिथोसंबन्धात्तु वाक्यभेदादित्येकीयव्याख्यामुपेक्ष्य स्वपक्षमुपसंहरति—तस्मादिति। प्राकरणित्वेऽपि ब्रह्मणोऽवान्तरवाक्यभेदेन यशादिवच्चोपास्तित्रयं विधेयं, विधेयत्रयधर्मवद्ब्रह्मोपास्तिश्चैवेति कुतो वाक्यभेद इत्यंके। तन्न। अन्तस्तद्धर्माधिकरणेन सार्वात्म्यसर्वदुरितविरहाभ्यां सर्वकारणे ब्रह्मणि सिद्धे रूपवत्त्वादिकार्यधर्मा नीतास्तथात्रापि प्रागुक्तन्यायेन प्राणादिधर्माणां पृथग्विचारावसरः। तस्माज्जीवप्राणब्रह्माणि सहोपास्यानि ब्रह्मैव वा प्रतिपाद्यमिति पदार्थवाक्यार्थयोर्बलाबलज्ञानेन संदिह्य प्रधानप्रकृत्यर्थाभेदेन गुणभूतप्रत्ययार्थभेदनयनवदत्रापि स्वतन्त्रप्राणादिपदार्थभेदबुद्धौ तदपेक्षत्वेन गुणभूतवाक्यार्थबुद्धेरन्यथा वाक्यार्थबुद्ध्योपजीव्यत्वेन स्वातन्त्र्याद्वाक्यैक्यं भङ्क्त्वा त्रीणि सहोपास्यानीति प्राप्य पदानां वाक्यार्थबोधोद्देशेन प्रवृत्त

सिद्धम् ॥ ३१ ॥ इति श्रीमच्छारीरकमीमांसाभाष्ये शंकरभगवत्पादकृतौ प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

रत्नप्रभाव्याख्या

दिति । तस्माज्ज्ञेयप्रत्यग्ब्रह्मपरमिदं वाक्यमित्युपसंहरति—**तस्मादिति** ॥ ३१ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्री-न्दानन्दभगवत्पादकृतौ श्रीमच्छारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

भामतीव्याख्या

पासा भावार्थो विधेयस्तस्य च भेदाद्विप्यावृत्तिलक्षणो वाक्यभेदोऽतिस्फुट इति भाष्यकृता नोद्घाटितः, स्वव्याख्यानेनैवोक्तप्रा-दिति सर्वमवदातम् ॥ ३१ ॥ इति श्रीवाचस्पतिमिश्रविरचिते भाष्यविभागे भामत्यां प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

आनन्दगिरीयव्याख्या

रीयकत्वाद्वाक्यार्थबोधप्राधान्यादुपक्रमोपसंहारैकरूप्यसिद्धप्रधानवाक्यार्थभङ्गायोगात्, प्राणादिलिङ्गानां च ब्रह्मणि नीतत्वात्, अनन्यथा-ब्रह्मलिङ्गाद्ब्रह्मैवात्र प्रतिपाद्यमिति सिद्धान्तयितव्यम् । सर्वथापि प्रातर्दनं वाक्यं ब्रह्मणि ज्ञेये समन्वितमिति ॥ ३१ ॥ इति श्रीमत्परमहं-व्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते शारीरकभाष्यनिर्णये प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

## ॥ इति प्रथमस्याध्यायस्य स्पष्टब्रह्मलिङ्गश्रुतिसमन्वयाख्यः प्रथमः पादः ॥



# प्रथमाध्याये द्वितीयः पादः ।

प्रथमे पादे 'जन्माद्यस्य यतः' इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्म तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्वं, नित्यत्वं, सर्वज्ञत्वं, सर्वशक्तित्वं, सर्वात्मत्वमि तीयका धर्मा उक्ता एव भवन्ति । अर्थान्तरप्रसिद्धानां च केषांचिच्छब्दानां ब्रह्मविषय तिपादनेन कानिचिद्वाक्यानि स्पष्टब्रह्मलिङ्गानि संदिह्यमानानि ब्रह्मपरतया निर्णीतानि प्यन्यानि वाक्यान्यस्पष्टब्रह्मलिङ्गानि संदिह्यन्ते—किं परं ब्रह्म प्रतिपादयन्त्याहोस्वि किंचिदिति । तन्निर्णयाय द्वितीयतृतीयौ पादावारभ्येते ।

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥




मनोमयोऽयं शारीर ईशो वा प्राणमानसे । हृदयस्थित्यणीयस्त्वे जीवे स्युस्तेन जीवगाः ।
शमवाक्यगतं ब्रह्म तद्धितादिरपेक्षते । प्राणादियोगश्चिन्तार्थश्चिन्त्यं ब्रह्म प्रसिद्धितः ॥ २ ॥

इदमाम्नायते—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमय

---

रत्नप्रभाव्याख्या

श्रीरामं सिद्धमत्तारं गुहाशायिनमान्तरम् । अन्तर्यामिणमज्ञेयं वैश्वानरमहं भजे ॥ १ ॥ पूर्वपादेनोत्तर वक्तुं वृत्तमनुवदति—**प्रथम इति** । जगत्कारणत्वोक्त्या व्यापित्वादिकमर्थात्सिद्धम् । तदुपजीव्योत्तरं पादद्वयं हेतुहेतुमद्भावः संगतिः । कथं पादभेद इत्याशङ्क्य पादानां प्रमेयभेदमाह—**अर्थान्तरेति** । आकाशादिश लिङ्गैर्ब्रह्मणि समन्वयो दर्शितः । अस्पष्टब्रह्मलिङ्गवाक्यसमन्वयः पादद्वये वक्ष्यते । प्रायेणोपास्यज्ञेय वान्तरभेद इति भावः । छान्दोग्यवाक्यमुदाहरति—**इदमिति** । तस्माज्जायत इति तज्जं, तस्मिंल्लीयत इति निति चेष्टत इति तदनं, तज्जं च तल्लं च तदनं चेति तज्जलान् । कर्मधारयेऽस्मिन् शाकपार्थिवन्यायेन तच्छब्दस्य लोपः । तज्जलानमिति वाच्ये छान्दसोऽवयवलोपः । इतिशब्दो हेतौ । सर्वमिदं जगद्ब्रह्मैव, तद्वि ब्रह्मणि मित्रामित्रभेदाभावाच्छान्तो रागादिरहितो भवेदिति गुणविधिः । स क्रतुमुपासनं कुर्वीतेति विहितोपासन इत्यनुवादात्फलमाह—**अथेति** । क्रतुमयः संकल्पविकार इत्यर्थः । पुरुषस्य ध्यानविकारत्वं स्फुटयति—यथे

भामतीव्याख्या

अथ द्वितीयं पादमारिप्सुः पूर्वोक्तमर्थं स्मारयति वक्ष्यमाणोपयोगितया—**प्रथमे पाद इति** । उत्तरत्र हि नित्यत्वादयः सिद्धवद्धेतुतयोपदेक्ष्यन्ते । न चैते साक्षात्पूर्वमुपपादिता इति कथं हेतुभावेन न शक्या उपदेष्टुमि **समस्तजगत्कारणस्येति** । यद्यप्येते न पूर्वं कण्ठत उक्तास्तथापि ब्रह्मणो जगज्जन्मादिकारणत्वोपपादनेना न्यायेनोपक्षिप्ता इत्युपपन्नस्तेषामुत्तरत्र हेतुभावेनोपन्यास इत्यर्थः । **अर्थान्तरप्रसिद्धानां चेति** । यत्रार्थान्तरप्र प्राणज्योतिरादयो ब्रह्मणि व्याख्यायन्ते, तदव्यभिचारिलिङ्गश्रवणात् । तत्र केव कथा मनोमयादीनामर्थान्तरे प्रसिद्धानां चरत्वनिर्णयं प्रतीत्यभिप्रायः । पूर्वपक्षाभिप्रायं त्वग्रे दर्शयिष्यामः । **सर्वत्र प्रसिद्धोपदेशात्** । **इदमाम्नायते** । स ब्रह्म । कुतः, **तज्जलानिति** । यतस्तस्माद्ब्रह्मणो जायत इति तज्जं, तस्मिंश्च लीयत इति तल्लं, तस्मिंश्चानिति शि इति तदनं जगत्, तस्मात्सर्वं खल्विदं जगद्ब्रह्म । अतः कः कस्मिन्रज्यते कश्च कं द्वेष्टीति रागद्वेषरहितः शान्तः

**...तु क्रतुमयः पुरुषो यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत**

आनन्दगिरीयव्याख्या

पूर्वोपजीवनेनोत्तरोत्थानाद्धेतुहेतुमत्त्वं संबन्धं वक्तुं वृत्तमनुवदति । **प्रथम इति** । कारणत्वमात्रं नात्रोपयुक्तं, वद्धेतुतयोपादानात्, अतस्तदनुक्तौ कथं संगतिरित्याशङ्क्याह—**तस्येति** । उक्तमुपजीव्योत्तरप्रवृत्तौ कथं पादभेद इत्या न्तरेति । उत्तरपादद्वयस्यानधिगतमर्थमाह—**पुनरिति** । पूर्वं भूताकाशादिषु रूढाकाशादिशब्दानां ब्रह्मपरत्वे स्पष्टब्रह्मलिङ्गानि नीतानि । अथास्पष्टब्रह्मलिङ्गानान्यर्थान्तरार्थतया शङ्क्यमानानि ब्रह्मणि नीयन्ते । तत्र द्वितीयतृती दस्तु प्रायशः सविशेषनिर्विशेषार्थतया रूढियोगबहुलतया वेति भावः । पूर्वं जीवलिङ्गबाधया ब्रह्मपरत्ववन्मनोमयादि तत्परत्वमाह—**सर्वत्रेति** । छान्दोग्यवाक्यमुदाहरति—**इदमिति** । सर्वं जगद्ब्रह्मैवेत्यत्र हेतुमाह—**तज्जेति** । तज्जं, तस्मिल्लीयत इति तल्लं, तस्मिन्ननिति चेष्टत इति तदनं, तज्जं च तल्लं च तदनं च तदिति तज्जलान् । अवय इति हेतौ । यस्मादेवं जगत्तस्माद्ब्रह्मैव सर्वं जगदित्यर्थः । अतो धियो रागादिविषयाभावादुपासीत स शान्तः स्यादित्याह— गुणं विधाय गुणिविधित्सया पुंप्रयत्नस्य साफल्यमाह—**अथेति** । पुरुषोऽधिकृतः क्रतुमयः संकल्पप्रधानः । तत्र हेतुं

था क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत' 'मनोमयः प्राणशरीरो भारूपः' (छा० ३।१४।१,२) इत्यादि । तत्र संशयः—किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यत आहोस्वित्परं ब्रह्मेति । किं तावत्प्राप्तम् । शारीर इति । कुतः, तस्य हि कार्यकरणाधिपतेः प्रसिद्धो मनआदिभिः संबन्धो न परस्य ब्रह्मणः, 'अप्राणो ह्यमनाः शुभ्रः' (मु० २।१।२) इत्यादिश्रुतिभ्यः । ननु 'सर्वं खल्विदं ब्रह्म' इति स्वशब्देनैव ब्रह्मोपात्तं, कथमिह शारीर आत्मोपास्य आशङ्क्यते । नैष दोषः । नेदं वाक्यं ब्रह्मोपासनाविधिपरं किं तर्हि शमविधिपरम् । यत्कारणं 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्याह । एतदुक्तं भवति—यस्मात्सर्वमिदं विकारजातं ब्रह्मैव, तज्जत्वात्तल्लत्वात्तदनत्वाच्च । नच सर्वस्यैकात्मत्वे रागादयः संभवन्ति, तस्माच्छान्त उपासीतेति । नच शमविधिपरत्वे सत्यनेन वाक्येन ब्रह्मोपासनं नियन्तुं शक्यते । उपासनं तु 'स क्रतुं कुर्वीत' इत्यनेन विधीयते । क्रतुः संकल्पो ध्यानमित्यर्थः । तस्य च विषयत्वेन श्रूयते—'मनोमयः प्राणशरीरः' इति जीवलिङ्गम् । अतो ब्रूमो जीवविषयमेतदुपासन-

रत्नप्रभाव्याख्या

यति, मृत्वा ध्यानमहिम्ना तद्ध्येयरूपेण जायत इत्यर्थः । क्रतुमयः संकल्पप्रधान इति वार्थः । क्रतोर्विषयमाह—मन । ब्रह्मेत्युपक्रमान्मनोमयं प्राणशरीरं भारूपं सत्यसंकल्पमन्तर्हृदये ध्येयमित्यर्थः । पूर्वत्र ब्रह्मलिङ्गैरब्रह्मलिङ्गबाध न तथेहोपक्रमे ब्रह्मणो लिङ्गमस्ति, किंतु प्रकरणम् । तच्च शान्तिगुणविधानार्थमन्यथासिद्धम् । अतो जीवलिङ्गं इति प्रत्युदाहरणेन पूर्वपक्षयति—**शारीर इत्यादिना** । श्रुतिमाशङ्क्यान्यथासिद्ध्या परिहरति—**नैष दोष** शमविधिपरत्वे हेतुमाह—**यत्कारणमिति** । यत एवमाह तस्माच्छमविधिपरमित्यन्वयः । अत्रेदंशब्दः प्रकृतब्रह्मार्थो नतु जगत्परामर्शार्थः, जगद्विशेषणे प्रयोजनाभावात् । अत्र प्रयोजनाभावेऽपि यत्र प्रयोजनं तत्र भवजगद्विशेषणं, यथा 'आत्मैवेदं सर्वम्' । अत्र बाधायां समानाधिकरणदार्ढ्यार्थं विशेषणमावश्यकं, तद्वाक्यस्य ज्ञेयब्रह्मत्वात् । अत्र तूपासनायां बाधानावश्यकत्वाद्विषयाभेदेन ब्रह्मण उपास्यत्वात् । **नच शमेति** । शमध्यानयोर्विधौ

भामतीव्याख्या

**शारीर इत्यादि** । तत्र संशयः—किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते आहोस्विद्ब्रह्मेति । किं शारीरो जीव इति । कुतः । 'क्रतुम्' इत्यादिवाक्येन विहितां क्रतुभावनामनूद्य 'सर्वम्' इत्यादिवाक्यं शमगुणे विधिः । 'सर्वं खल्विदं ब्रह्म' इति वाक्यं प्रथमपठितमप्यर्थालोचनया परमेव, तदर्थोपजीवित्वात् । एवं च संकल्पविधिः प्रथमो... सप्रपर्यवस्यन्विषयापेक्षः स्वयमनिर्वृत्तो न विध्यन्तरेणोपजीवितुं शक्यः, अनुपपादकत्वात् । तस्माच्छान्ततागुणविधाना... 'मनोमयः प्राणशरीरः' इत्यादिभिर्विषयोपनायकैः संबध्यते । मनोमयत्वादि च कार्यकारणसंघातात्मनो जीवात्मन एव निरूढ... जीवात्मनोपास्येनोपरक्तोपासना न पश्चात् ब्रह्मणा संबद्धुमर्हति, उत्पत्तिविशिष्टगुणावरोधात् । नच 'सर्वं खल्विदम्' इति वाक्यं ...पि तु शमहेतुवन्निगदार्थवादः शान्ततविधिपरः, 'शूर्पेण जुहोति' 'तेन ह्यन्नं क्रियते' इतिवत् । न चान्यपरादपि ब्रह्मापेक्षा स्वीक्रियत इति युक्तं, मनोमयत्वादिभिर्धर्मैर्जीवे सुप्रसिद्धैर्जीवविषयसमर्पणेनानपेक्षितत्वात् । सर्वकर्मत्वादि तु जीवस्य

आनन्दगिरीयव्याख्या

...स्मिन्देहे स्थितः संकल्पयते तथा तदनुसारेण फलं परत्र लभते सोऽधिकृतः क्रतुं ध्यानं कुर्वीत । किं ध्यायेदित्याकाङ्क्षाया... **मनोमय इति** । विभक्तिव्यत्ययेन मनोमयं प्राणशरीरं ध्यायेदित्यर्थः । आदिशब्दाद्भारूपः सत्यसंकल्प इत्यादि गृहीतम् । ...वादीनां प्रकृतब्रह्मानपेक्षत्वसापेक्षत्वाभ्यां संदेहमाह—**तत्रेति** । एकवाक्यस्थब्रह्मब्रह्मलिङ्गयोर्ब्रह्मलिङ्गवशाद्ब्रह्मलिङ्गं नीतम् ...ब्रह्मप्रकरणलिङ्गसंनिपाते किं युक्तमिति पृच्छति—**किमिति** । 'सर्वम्' इत्यादिश्रुतेः सविशेषार्थाया ध्येये ब्रह्मण्यन्वयोक्तेः संगतयः । पूर्वपक्षे जीवस्य, सिद्धान्ते परस्योपास्तिः फलम् । रात्रिसत्रन्यायेनोपास्त्या वाक्यशेषस्थो जीवः संबध्यत इति पूर्व... **—शारीर इति** । विश्वजिन्न्यायेन सर्वाभीष्टं ब्रह्मैव मनोमयादौ विशेष्याकाङ्क्षायामुपास्तिसंबन्धीत्याह—**कुत इति** । विशेष्या... अपि जीव एव लिङ्गवशीयस्तया संबध्यत इत्याह—**तस्येति** । तदन्यथासिद्धिं प्रत्याह—**नेति** । आदिपदेन 'अवागमनाः' इतिरुक्ता । श्रुत्या शङ्कते—**नन्विति** । न लिङ्गं श्रुत्या बाध्यमित्याह—**नैष इति** । किं पूर्ववाक्ये ब्रह्मोपास्तिर्विहितेत्युच्यते ...हतं सर्वथोत्तरत्र संबद्धमिति । नाद्य इत्याह—**नेदमिति** । शमविधिपरत्वे हेतुः—**यदिति** । 'उपासीत' इत्युपास्तिविधौ गुणविधिः, तत्राह—**एतदिति** । सर्वस्यैकात्मत्वेऽपि कथं शमविधिः, तत्राह—**नचेति** । तर्हि शमो ध्यानमित्युभयं विधीयतां, **—नचेति** । वाक्यभेदापत्तेरिति भावः । 'दध्ना जुहोति' इति होमानुवादेन गुणविधिवदिहापि शमविधौ वाक्यान्तरसिद्धोपास्ति... इत्याशङ्क्याह—**उपासनं त्विति** । क्रतुरेव तत्र विधीयते नोपास्तिरित्याशङ्क्योक्तम्—**क्रतुरिति** । द्वितीयं प्रत्याह—**तस्य चेति** । मनोमयादिशब्दनित्याशङ्क्य मनआदियोगस्य जीवलिङ्गत्वान्नेत्याह—**जीवेति** । तस्योपास्यत्वे वाक्यशेषस्थं सर्वकर्मत्वादि कथमित्या-

मिति । 'सर्वकर्मा सर्वकामः' इत्याद्यपि श्रूयमाणं पर्यायेण जीवविषयमुपपद्यते । 'एष म ऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा' इति च हृदयायतनत्वमणीयस्त्वं चाराग्रमात्रस्य वकल्पते नापरिच्छिन्नस्य ब्रह्मणः । ननु ज्यायान्पृथिव्या इत्याद्यपि न परिच्छिन्नेऽवकल्पते अत्र ब्रूमः—न तावदणीयस्त्वं ज्यायस्त्वं चोभयमेकस्मिन्समाश्रयितुं शक्यं, विरोधात् तराश्रयणे च प्रथमश्रुतत्वादणीयस्त्वं युक्तमाश्रयितुं, ज्यायस्त्वं तु ब्रह्मभावापेक्षया भवि निश्चिते च जीवविषयत्वे यदन्ते ब्रह्मसंकीर्तनम्—'एतद्ब्रह्म' (छा० ३।१४।४) इति प्रकृतपरामर्शार्थत्वाज्जीवविषयमेव । तस्मान्मनोमयत्वादिभिर्धर्मैर्जीव उपास्य इत्येवं प्रा परमेव ब्रह्म मनोमयत्वादिभिर्धर्मैरुपास्यम् । कुतः, सर्वत्र प्रसिद्धोपदेशात् । यत्सर्वेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणं, इह च 'सर्वं खल्विदं ब्रह्म' इति वाक्योप तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपदिश्यत इति युक्तम् । एवंच प्रकृतहानाप्रकृतप्रक्रिये

रत्नप्रभाव्याख्या

वाक्यभेदापत्तेरित्यर्थः । जन्मपरम्परया जीवस्यापि सर्वकर्मत्वादिसंभवमाह—**सर्वकर्मेति** । सर्वाणि कर्मा कामा भोग्या यस्य । सर्वगन्धः सर्वरस इत्यादिरादिशब्दार्थः । **आराग्रमात्रस्येति** । तोत्रप्रोताग्रश त्यर्थः । सर्वत्र प्रसिद्धब्रह्मण एवात्रोपास्यत्वोपदेशान्न जीव उपास्य इति सूत्रार्थमाह—**सर्वत्रेति** । यत्र पू पूर्वोत्तरपक्षसिद्धिः फलमिति मन्तव्यम् । यद्यपि निराकाङ्क्षं ब्रह्म तथापि मनः प्रचुरमुपाधिरस्य, प्राणः शरीरमस्ये तसर्वनाम्नः संनिहितविशेष्याकाङ्क्षत्वाद्ब्रह्म संबद्ध्यते । 'स्योनं ते सदनं करोमि' इति संस्कारार्थसदनस्य

भामतीव्याख्या

पर्यायेण भविष्यति । एवं चाणीयस्त्वमप्युपपन्नम् । परमात्मनस्त्वपरिमेयस्य तदनुपपत्तिः । प्रथमावगतेन चाणीय तदनुगुणतया व्याख्येयम् । व्याख्यातं च भाष्यकृता । एवं कर्मकर्तृव्यपदेशः सप्तमीप्रथमान्तता चाभेदेऽपि जीव दोपचारेण राहोः शिर इतिवद्द्रष्टव्या । 'एतद्ब्रह्म' इति च जीवविषयं, जीवस्यापि देहादिबृंहणत्वेन ब्रह्मत्वात् । एवं दयोऽपि परमात्मवर्तिनो जीवेऽपि संभवन्ति, तदव्यतिरेकात् । तस्माज्जीव एवोपास्यत्वेनात्र विवक्षितः, न परमात्मे प्राप्तेऽभिधीयते—'समासः सर्वनामार्थः संनिकृष्टमपेक्षते । तद्धितार्थोऽपि सामान्यं नापेक्षाया निवर्तकः ॥ ग्राह्यमन्यपरादपि । तथा च सत्यसंकल्पप्रभृतीनां यथार्थता ॥' भवेदेतदेवं यदि प्राणशरीर इत्यादीनां साक्षाज्जीववा त्वेतदस्ति । तथाहि—प्राणः शरीरमस्येति सर्वनामार्थो बहुव्रीहिः संनिहितं च सर्वनामार्थं संप्राप्य तदभिधानं मनोमयपदं पर्यवसिताभिधानं तदभिधानपर्यवसानायालं, तदेव तु मनोविकारो वा मनःप्रचुरं वा किमर्थमित्यपे तद्यत्रैव शब्दः समवेतार्थो भवति स समासार्थः । न चैष जीव एव समवेतार्थो न ब्रह्मणीति, तस्य 'अप्राणो भिस्तद्विरहप्रतिपादनादिति युक्तम्, तथापि सर्वविकारकारणतया, विकाराणां च स्वकारणादभेदात्तेषां च मनोम त्कारणस्य मनोमयत्वोपपत्तेः । स्यादेतत् । जीवस्य साक्षान्मनोमयत्वादयः, ब्रह्मणस्तु तद्द्वारा । तत्र प्रथमं द्वारस्य पास्यमस्तु, न पुनर्जघन्यं ब्रह्म । ब्रह्मलिङ्गानि च जीवस्य ब्रह्मणोऽभेदाज्जीवेऽप्युपपत्स्यन्ते । तदेतदत्र संप्रधार्यं जीवानां तदभिन्नानामस्तु तद्वत्ता, तथाच जीवस्य मनोमयत्वादिभिः प्रथममवगमात्तस्यैवोपास्यत्वं, उत न जीव तदभिन्नस्यापि । जीवलिङ्गैस्तु ब्रह्म तद्वत्, तथाच ब्रह्मलिङ्गानां दर्शनात्, तेषां च जीवेऽनुपपत्तेर्ब्रह्मैवोपास्यमिति । 'समारोप्यस्य रूपेण विषयो रूपवान्भवेत् । विषयस्य तु रूपेण समारोप्यं न रूपवत् ॥' समारोपितस्य हि रूपेण

आनन्दगिरीयव्याख्या

शङ्क्य क्रमेणेत्याह—**सर्वेति** । जीवपक्षे लिङ्गद्वयमाह—**एष इति** । जीवे ज्यायस्त्वायोगं शङ्कते—**नन्विति** । किं चोभयं सत्यमन्यतरद्वेति विकल्पयति—**अत्रेति** । आद्यं दूषयति—**न तावदिति** । द्वितीयं निराह—**अन्यतरेति** । वस्य युक्तमिति तस्यैवोपास्यतेत्यर्थः । श्रुत्या ज्यायस्त्वस्यात्यन्तबाधे श्रुतिबाधमाशङ्क्याह—**ज्यायस्त्वं त्विति** । जीवस्य तत्राह—**निश्चिते चेति** । जीवेऽपि देहादिबृंहणाज्ज्यायस्त्वन्यायाद्वा ब्रह्मेत्यर्थः । 'एतमितः प्रेत्याभिसंभवितास्मि' देशात्, 'अन्तरात्मन्पुरुषः' इति न तुल्याधिकारे भेदोक्तेर्न जीवस्योपास्यतेत्याशङ्क्य साधनफलावस्थापेक्षया कर्मक मस्मि' इति वदुपचाराज्जीवस्यैवोपास्यतेत्युपसंहरति—**तस्मादिति** । पूर्वपक्षमनूद्य सिद्धान्तयन्सूत्राद्बहिरेव प्रति मनोमयादिशब्दा ध्येये जीवे भान्ति न ब्रह्म तथेत्याह—**कुत इति** । सूत्रमादाय व्याचष्टे—**सर्वत्रेति** । रात्रि जीवगामि चेनाफलत्वाद्भिन्नजिज्ञास्यस्य गुरोरपि ब्रह्मगामित्वेन फलवतः श्रुतितात्पर्यगमकस्य बलीयस्त्वाद्ब्रह्मैवात्रोपास्य मनोमयत्वादिलिङ्गं बाधित्वा ब्रह्मश्रुत्या ब्रह्मैवोपास्यमित्याह—**इह चेति** । किंचाफललिङ्गोपनीतं जीवं हित्वा फल ब्राह्ममित्याह—**एवमिति** । प्राणः शरीरमस्येति समासगतसर्वनाम्ना संनिहितार्थेन प्रकृतं ब्रह्म हित्वा जीवग्रहणं

तः । ननु वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्दिष्टं न स्वविवक्षयेत्युक्तम् । अत्रोच्यते—
पि शमविधिविवक्षया ब्रह्म निर्दिष्टं तथापि मनोमयत्वादिधूपदिश्यमानेषु तदेव ब्रह्म संनि-
तं भवति । जीवस्तु न संनिहितो नच स्वशब्देनोपात्त इति वैषम्यम् ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

कामिष्टा विवक्षिताः । यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः संभवति तथाप्युपादानेन
लेनोपचर्यते । लोके हि यच्छब्दाभिहितमुपादेयं भवति तद्विवक्षितमित्युच्यते, यदनुपादेयं
दविवक्षितमिति । तद्वद्वेदेऽप्युपादेयत्वेनाभिहितं तद्विवक्षितं भवति, इतरदविवक्षितम् । उपादा-
नुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते । तदिह ये विवक्षिता गुणा उपासनाया-
पादेयत्वेनोपदिष्टाः सत्यसंकल्पप्रभृतयस्ते परस्मिन्ब्रह्मण्युपपद्यन्ते । सत्यसंकल्पत्वं हि सृष्टि-
प्रतिसंहारेष्वप्रतिबद्धशक्तित्वात्परमात्मन एवावकल्पते । परमात्मगुणत्वेन च 'य आत्माप-
तपाप्मा' ( छा० ८।७।१ ) इत्यत्र सत्यकामः सत्यसंकल्प इति श्रुतम् । आकाशात्मेत्यादिना-
शवदात्माऽस्येत्यर्थः । सर्वगतत्वादिभिर्धर्मैः संभवत्याकाशेन साम्यं ब्रह्मणः । 'ज्यायान्पृ-
थिव्याः' इत्यादिना चैतदेव दर्शयति । यदाप्याकाश आत्मा यस्येति व्याख्यायते, तदापि संभवति
र्वजगत्कारणस्य सर्वात्मनो ब्रह्मण आकाशात्मत्वम् । अत एव 'सर्वकर्मा' इत्यादि । एवमिहो-

### रत्नप्रभाव्याख्या

न्सीद' इति साकाङ्क्षतच्छब्देन परामर्शदर्शनादित्याह—**अत्रोच्यत इति** । स्योनं पात्रं ते पुरोडाशस्येति श्रुत्यर्थः ।
ऽपि लिङ्गात्संनिहित इत्यत आह—**जीवस्त्विति** । इदं हि लिङ्गद्वयं लोकसिद्धं जीवं न संनिधापयति, दुःखिन
ययोग्यत्वात्फलाभावाच्च । अतो विश्वजिन्न्यायेन सर्वाभिलषितमानन्दरूपं ब्रह्मैवोपासनाक्रियानुबन्धीतिभावः । किंच
श्रुत्या लिङ्गबाध इत्याह—**नचेति** । अन्यतराकाङ्क्षानुगृहीतं फलवत्प्रकरणं विफललिङ्गाद्बलीय इति समुदायार्थः ॥ १ ॥
विवक्षायाः फलमुपादानं स्वीकारः, स च प्रकृतेषु गुणेष्वस्तीति विवक्षोपचार इत्याह—**तथाप्युपादानेनेति** ।
ग्राह्यमिदं त्याज्यमिति धीर्विवक्षाधीना वेदे कुतः स्यादित्यत आह—**उपादानानुपादाने त्विति** । तात्पर्यं नाम
दर्थप्रतीत्यनुकूलत्वं शब्दधर्मः । उपक्रमादिना तस्य ज्ञानात्तयोरवगम इत्यर्थः । **तदिहेति** । तत् तस्मात् । तात्पर्य-

### भामतीव्याख्या

ना रज्जू रूपवती, नतु रज्जुरूपेणाभिगम्यत्वादिना भुजङ्गो रूपवान् । तदा भुजङ्गस्येवाभाविकं रूपवत् । भुजङ्गदशायां
नास्ति वास्तवी रज्जुः । तदिह समारोपितजीवरूपेण वस्तुसद्ब्रह्म रूपवदुच्यते, नतु ब्रह्मरूपैर्नित्यत्वादिभिर्जीवस्तद्वान्भवि-
, तस्य तदानीमसंभवात् । तस्माद्ब्रह्मलिङ्गदर्शनाज्जीवे च तदसंभवाद्ब्रह्मैवोपास्यं न जीव इति सिद्धम् । एतदुपलक्षणाय च
खल्विदं ब्रह्म' इति वाक्यमुपन्यस्तमिति ॥ १ ॥ **यद्यप्यपौरुषेय इति** । शास्त्रयोनित्वेऽपीश्वरस्य पूर्वपूर्वसृष्टिरचितसंदर्भा-
नत्वेनास्वातन्त्र्यादपौरुषेयत्वाभिधानं, तथा चास्वातन्त्र्येण विवक्षा नास्तीत्युक्तम् । परिग्रहपरित्यागौ चोपादानानुपादाने उक्ते,
दित्वमेव । अन्यथोद्देश्यतयानुपादेयस्य ग्रहादेरविवक्षितत्वेन चमसादावपि संमार्गप्रसङ्गात् । तस्मादनुपादेयत्वेऽपि ग्रह उद्दे-
परिगृहीतो विवक्षितः । तद्गतं त्वेकत्वमवच्छेदकत्वेन वर्जितमविवक्षितम् । इच्छानिच्छे च भक्तितः । तदिदमुक्तम्—**वेद-**
**तात्पर्यातात्पर्याभ्यामवगम्येते इति** । यत्परं वेदवाक्यं तत्तेनोपात्तं विवक्षितम्, अतत्परेण चानुपात्तमविवक्षित-

### आनन्दगिरीयव्याख्या

क्रिया चेत्यर्थः । आगतो राजपुरुषस्तं भोजयेदितिवदन्यशेषस्य ब्रह्मणः सर्वनामादिना न परामर्शः स्यादित्याशङ्क्य—**नन्विति** ।
सीद' इत्यादौ सदनस्यैवोपसर्जनस्यापि परामर्शमाह—**अत्रेति** । जीवस्यापि लिङ्गादस्ति संनिधिरित्याशङ्क्य तयोर्यास्तिधियो विशेष-
ादविवक्षितं लिङ्गमित्याह—**जीवस्त्विति** । तथापि मनोमयादिशब्दात्तदुक्तिः, नेत्याह—**नचेति** । तस्य तद्वाचित्वादित्यर्थः ।
जीवब्रह्मणोरिति शेषः ॥ १ ॥ इतश्च ब्रह्मैवात्रोपास्यमित्याह—**विवक्षितेति** । ननु शास्त्रयोनित्वेऽपीश्वरस्य रचनायामस्वातन्त्र्या-
त्वं वेदस्योक्तम् । तत्र वक्तुरभावादित्थं विवक्षितपदं कथं विगृह्यते, तत्राह—**यद्यपीति** । विवक्षितस्योपादानादुपास्त्यानुष्ठानस्य
त्वं सत्यसंकल्पादिगुणेषु दुर्विवक्षितत्वमुपचर्य विग्रह इत्यर्थः । उक्तोपचारस्यालौकिकत्वं प्रत्याह—**लोकेऽपीति** । विवक्षित-
योरन्योन्याश्रयत्वमाशङ्क्याह—**उपादानेति** । परिग्रहपरित्यागावुपादानानुपादाने । प्रसङ्गागतमुक्त्वा सूत्रं व्याचष्टे—**तदिहेति** ।
यथोक्तमात्मोपपत्तिपरामर्शः । प्रकृतं प्रकरणमित्युक्तम् । अथान्येव सत्यसंकल्पत्वं साधयति—**सत्येति** । श्रुतिरपि सूचिय-
त्याह—**परमात्मेति** । आकाशात्मत्वं वर्णं तन्निरुक्तिं करोति—**आकाशेति** । कथं जडाजडयोः साम्यं, तदाह—**सर्वेति** ।
सर्वगतत्वमात्रकमित्याह—**ज्यायानिति** । आकाशात्मत्वस्य निरवयवत्वमाशङ्क्याङ्गीकरोति—**यदेति** । सर्वात्मत्वमत एव-

पास्यतया विवक्षिता गुणा ब्रह्मण्युपपद्यन्ते । यत्तूक्तं 'मनोमयः प्राणशरीरः' इति जी॰ तद्ब्रह्मण्युपपद्यत इति, तदपि ब्रह्मण्युपपद्यत इति ब्रूमः । सर्वात्मत्वाद्धि ब्रह्मणो जीव॰ मनोमयत्वादीनि ब्रह्मसंबन्धीनि भवन्ति । तथाच ब्रह्मविषये श्रुतिस्मृती भवतः—'त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्व॰ ( श्वे॰ ४।३ ) इति । 'सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् । सर्वतःश्रुतिमल्लोके वृत्य तिष्ठति' ( गी॰ १३।१३ ) इति च । 'अप्राणो ह्यमनाः शुभ्रः' इति श्रुतिः शुद्धब्र॰ इयं तु 'मनोमयः प्राणशरीरः' इति सगुणब्रह्मविषयेति विशेषः । अतो विवक्षितगु॰ परमेव ब्रह्मेहोपास्यत्वेनोपदिष्टमिति गम्यते ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

पूर्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणानामुपपत्तिरुक्ता । अनेन तु शारीरे तेषामनुपपत्ति॰ तुशब्दोऽवधारणार्थः । ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणं, नतु शारीरो जीवो म॰ दिगुणः । यत्कारणं सत्यसंकल्पः, आकाशात्मा, अवाकी, अनादरः, ज्यायान्पृथिव्या इति तीयका गुणा न शारीर आञ्जस्येनोपपद्यन्ते । शारीर इति शरीरे भव इत्यर्थः । नन्वी॰ शरीरे भवति । सत्यम् । शरीरे भवति नतु शरीर एव भवति, 'ज्यायान्पृथिव्या ज्या॰ रिक्षात्' 'आकाशवत्सर्वगतश्च नित्यः' इति च व्यापित्वश्रवणात् । जीवस्तु शरीर ए॰ तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात् ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात्कर्मकर्तृव्यपदेशो भवति 'एतमितः प्रेत्यामि॰

---

रत्नप्रभाव्याख्या

वत्त्वादित्यर्थः । सर्वात्मत्वे प्रमाणमाह—**तथाचेति** । जीर्णः स्थविरो यो दण्डेन वञ्चति गच्छति सोऽपि जातो बालः स त्वमेव । सर्वतः सर्वासु दिक्षु श्रुतयः श्रोत्राण्यस्येति सर्वतःश्रुतिमत् । सर्वजन्तूनां प्रसिद्धाः प॰ सर्वात्मत्वोक्तिः ॥ २ ॥ ननु जीवधर्माश्चेद्ब्रह्मणि योज्यन्ते तर्हि ब्रह्मधर्मा एव जीवे किमिति न योज्य॰ **अनुपपत्तेरिति** । सूत्रं व्याचष्टे—**पूर्वेणेति** । सर्वात्मत्वादिरुक्तन्यायः । कल्पितस्य धर्मा अधिष्ठाने सं॰ ष्ठानधर्माः कल्पित इति भावः । अधिष्ठानज्ञानकाले कल्पितधर्माभावात् । वागेव वाकः सोऽस्यास्तीति वा॰ अवाकी । अनिन्द्रिय इत्यर्थः । कुत्राप्यादरः कामोऽस्य नास्तीत्यनादरः । नित्यतृप्त इत्यर्थः । ज्यायस्त्वाद्यु॰ इति परिच्छेदो हेतुः सूत्रोक्तः । स तु जीवस्यैव नेश्वरस्येत्याह—**सत्यमित्यादिना** ॥ ३ ॥ प्रापकत्वेन

भामतीव्याख्या

मित्यर्थः ॥ २ ॥ स्यादेतत् । यथा सत्यसंकल्पत्वादयो ब्रह्मण्युपपद्यन्ते, एवं शारीरेऽप्युपपत्स्यन्ते, शारीरस्य ब्रह्मणोऽभेद॰

आनन्दगिरीयव्याख्या

त्युक्तम् । आदिपदं सर्वकामादिसंग्रहार्थम् । उक्तामुपपत्तिमुपसंहरति—**एवमिति** । इहेति प्रकरणोक्तिः । तेन तदेवो॰ ध्येयस्यापि मनोमयत्वादेर्ब्रह्मणि नोपपत्तिरित्याशङ्क्याह—**यत्त्विति** । तस्यापि ब्रह्मण्युपपत्तिमाह—**तदपीति** । ब्रह्मणि सिद्धिः, तत्राह—**सर्वेति** । जीवस्यैवासाधारणं मनोमयत्वादीत्युपेत्य ब्रह्मण्युपपत्तिमुक्त्वा तस्य साधारण्यं चेति । जीर्णः स्थविरो भूत्वा यो दण्डेन वञ्चति गच्छति सोऽपि त्वमेव । सर्वतः सर्वासु दिक्षु श्रुतयः श्रोत्राण्यस्येति ब्रह्मणि मनोमयत्वादि वदतः श्रुत्यन्तरविरोधमाशङ्क्याह—**अप्राणो हीति** । सूत्रार्थमुपसंहरति—**अत इति** ॥ २ ॥ मनोमयत्वादीष्टं चेद्ब्रह्मगतमपि सत्यसंकल्पत्वाद्यभेदाज्जीवेऽस्तु, नेत्याह—**अनुपपत्तेस्त्विति** । सूत्रं व्याख्यातुं संग॰ आरोप्यरूपेण विषयस्यैव रूपित्वं न विपरीतं, नहि रज्ज्वा रूपेण सर्पो रूपवानित्यर्थः । अवधारणमेव स्फोरयन्॰ **ब्रह्मेति** । सर्वात्मत्वादिरुक्तो न्यायः । अनुपपत्तेरिति व्याचष्टे—**यदिति** । वागेव वाकः सोऽस्यास्तीति वाकी न॰ गादिसर्वेन्द्रियरहित इत्यर्थः । आप्तकामत्वान्न कुत्रचिदादरोऽस्तीत्यनादरः । शारीरस्यापि ॰ऽपि व्यापित्वं स्यादिति अयोगव्यवच्छेदमाशङ्क्यान्ययोगव्यवच्छेदाभावान्नेत्याह—**सत्यमिति** । अन्ययोगव्यवच्छेदे हेतुः—**ज्यायानिति** विशिष्टं शारीरत्वं, तत्राह—**जीवस्त्विति** ॥ ३ ॥ जीवस्य मनोमयत्वादिगुणत्वाभावे हेत्वन्तरम्—**कर्मेति** । चशब्दार्थमाह—**इतश्चेति** । प्राप्यप्रापकत्वेन कर्मकर्तृव्यपदेशं विशदयति—**एतमिति** । वाक्यं व्याकरोति—

अस्मि' (छा० ३।१४।४) इति । एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशति । अभिसंभवितास्मीति, शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन । अभिसंभवितास्मीति, प्राप्तास्मीत्यर्थः । नच सत्यां गतावेकस्य कर्मकर्तृव्यपदेशो युक्तः । तथोपास्योपासकभावोऽपि भेदाधिष्ठान एव । तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः ॥ ४ ॥

## शब्दविशेषात् ॥ ५ ॥

तश्च शारीरादन्यो मनोमयत्वादिगुणः, यस्माच्छब्दविशेषो भवति समानप्रकरणे श्रुत्यन्तरे—यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयः' (शत० ब्रा० १०।६।३।२) इति । शारीरस्यात्मनो यः शब्दोऽभिधायकः सप्तम्यन्तोऽन्तरात्मन्निति तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः । तस्मात्तयोर्भेदोऽधिगम्यते ॥ ५ ॥

## स्मृतेश्च ॥ ६ ॥

स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' (गी० १८।६१) इत्याद्या । अत्राह—कः पुनरयं शारीरो नाम परमात्मनोऽन्यः, यः प्रतिषिध्यते 'अनुपपत्तेस्तु न शारीरः' इत्यादिना । श्रुतिस्तु—'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' (बृह० ३।७।२३) इत्येवंजातीयका परमात्मनोऽन्यमात्मानं वारयति । तथा स्मृतिरपि—'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' (गी० १३।२) इत्येवंजातीयकेति । अत्रोच्यते—सत्यमेवैतत् । पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते । यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि

रत्नप्रभाव्याख्या

: । कर्मकर्तृव्यपदेशपदस्यार्थान्तरमाह—**तथोपास्येति** ॥ ४ ॥ एकार्थत्वं प्रकरणस्य समानत्वम् । अन्तरात्मन्निति लोपश्छान्दसः । शब्दयोर्विशेषो विभक्तिभेदः । तस्मात्तदर्थयोर्भेद इति सूत्रार्थः ॥ ५ ॥ स्मृतौ हृदिस्थस्य जीवादन्यत्रापि हृदिस्थो मनोमय ईश्वर इत्याह—**स्मृतेश्चेति** । भूतानि जीवान् । यन्त्रं शरीरम् । अत्र सूत्रकृता सत्यभेद इति भ्रान्तिनिरासायेक्षत्यधिकरणे निरस्तमपि चोद्यमुद्भाव्य निरस्यति—**अत्राहेत्यादिना** । त्वदुक्तरीत्या वस्तुत

भामतीव्याख्या

मनोमयत्वादयो ब्रह्मणीत्यत आह सूत्रकारः—**अनुपपत्तेस्तु न शारीरः** ॥ ३ ॥ ४ ॥ ५ ॥ यत्तदवोचाम समारोप्यधर्माः विषये संभवन्ति, नतु विषयधर्माः समारोप्य इति । तस्येत उत्थानम् । अत्राह चोदकः—**कः पुनरयं शारीरो नाम** । न तावद्भेदप्रतिषेधाद्भेदव्यपदेशाच्च भेदाभेदावेकत्र तात्त्विकौ भवितुमर्हतो विरोधादित्युक्तम् । तस्मादेकमिह तात्त्विकमतात्त्विकमितरत्, तत्र पौर्वापर्येणाद्वैतप्रतिपादनपरत्वाद्वेदान्तानां द्वैतग्राहिणश्च मानान्तरस्याभावात्तद्बाधनाच्च । तेनाद्वैतमेव परमार्थः । 'अनुपपत्तेस्तु' इत्याद्यसंगतार्थमित्यर्थः । परिहरति—**सत्यमेवैतत् । पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते** । अनाद्यविद्यावच्छेदलब्धजीवभावः पर एवात्मा स्वतो भेदेनावभासते ।

आनन्दगिरीयव्याख्या

न व्यपदिशतीति संबन्धः । मामहं जानामीतिवद्व्यपदेशमाशङ्क्याह—**नचेति** । कर्मकर्तृव्यपदेशे सूत्राभिप्रेतं प्रकारान्तरमाह—**तथेति** । उक्तव्यपदेशफलमाह—**तस्मादिति** ॥ ४ ॥ तत्रैव हेत्वन्तरमाह—**शब्देति** । सूत्रे हेत्वन्तरद्योतकाभावमाशङ्क्य चशब्दमाकृष्य व्याकरोति—**इतश्चेति** । समानप्रकरणत्वमेकविद्याविषयत्वम् । अन्तरात्मन्निति छान्दसो विभक्तिलोपः । फलमाह—**तस्मादिति** ॥ ५ ॥ आत्मान्तःस्थितस्यान्यस्यायोगे 'स्वे महिम्नि' इतिवदुपचारादेव शब्दभेदः स्यादित्युक्तमाशङ्क्याह—**स्मृतेश्चेति** । हृदि स्थितस्य शारीराद्भेदः स्मृत्योच्यते । ततो मनोमयत्वादिविशिष्टो हृदि स्थितोऽन्यः शारीरादिति नोपचारशङ्केति व्याचष्टे—**स्मृतिश्चेति** । 'तमेव शरणं गच्छ' इत्यादिवाक्यगतादिशब्दार्थः । ईक्षत्यधिकरणे निरस्तमपि चोद्यं प्रसङ्गादुद्भावयति—**अत्रेति** । आभ्यां भेदवादः सप्तम्यर्थः । ननु नान्यत्वं साध्यते किंत्वन्यस्य मनोमयत्वादि निषिध्यते, तत्राह—**य इति** । विवक्षितगुणविशिष्टस्य ध्येयत्वनिषेधानुपपत्त्या तदन्यत्वधीरित्यर्थः । परस्यांशो विकारो वा जीवो नामेत्याशङ्क्य श्रुतिस्मृतिविरोधान्नैवमित्याह—**श्रुतीति** । नच भेदाभेदाभ्यां श्रुतिस्मृत्यविरोधः, तद्योगादिति । किं वस्तुतोऽन्यो जीवो नास्ति, किं सोपाधिकोऽपीति विकल्पयति—**अत्रेति** । आद्यमङ्गीकरोति—**सत्यमिति** । द्वितीयं दूषयति—**पर इति** । अपरिच्छिन्नस्योपाधिना परिच्छिन्नत्वदृष्टौ दृष्टान्तेन स्पष्ट-

नभः परिच्छिन्नवदवभासते, तद्वत्। तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न
प्राक् 'तत्त्वमसि' इत्यात्मैकत्वोपदेशग्रहणात्। गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्व
रिसमाप्तिरेव स्यात्॥ ६॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च॥

अर्भकमल्पमोको नीडं 'एष म आत्मान्तर्हृदये' इति परिच्छिन्नायतनत्वात्, स्वशब्दैः
'अणीयान्व्रीहेर्वा यवाद्वा' इत्यणीयस्त्वव्यपदेशात्, शारीर एवाराग्रमात्रो जीव इहोपदिश्यते
न सर्वगतः परमात्मेति यदुक्तं तत्परिहर्तव्यम्। अत्रोच्यते—नायं दोषः। न तावत्परि
देशस्य सर्वगतत्वव्यपदेशः कथमप्युपपद्यते। सर्वगतस्य तु सर्वदेशेषु विद्यमानत्वात्प्रस
प्रदेशव्यपदेशोऽपि कयाचिदपेक्षया संभवति। यथा समस्तवसुधाधिपतिरपि हि सन्नयोध्याधि
पतिरिति व्यपदिश्यते। कया पुनरपेक्षया सर्वगतः सन्नीश्वरोऽर्भकौका अणीयांश्च व्यपदिश्यत
इति। निचाय्यत्वादेवमिति ब्रूमः। एवमणीयस्त्वादिगुणगणोपेत ईश्वरस्तत्र हृदयपुण्डरीके
निचाय्यो द्रष्टव्य उपदिश्यते। यथा शालग्रामे हरिः। तत्रास्य बुद्धिविज्ञानं ग्राहकम्। सर्वगतो
ऽपीश्वरस्तत्र तत्रोपास्यमानः प्रसीदति। व्योमवच्चैतद्द्रष्टव्यम्। यथा सर्वगतमपि सद्व्योम
पाशाद्यपेक्षयार्भकौकोऽणीयश्च व्यपदिश्यते, एवं ब्रह्मापि। तदेवं निचाय्यत्वापेक्षं ब्रह्म
कस्त्वमणीयस्त्वं च न पारमार्थिकम्। तत्र यदाशङ्क्यते, हृदयायतनत्वाद्ब्रह्मणो हृदय

---

रत्नप्रभाव्याख्या

एकत्वमेव, भेदस्तु कल्पितः सूत्रेऽप्यनूद्यत इत्याह—**सत्यमिति** ॥ ६ ॥ अर्भकमोको यस्य सोऽर्भकौकाः
तस्मादार्थिकमल्पत्वम्। अणीयानित्यल्पत्ववाचकशब्देनापि श्रुतमित्याह—**स्वशब्देनेति**। नायं दोष इत्युक्तं
**न तावदिति**। कथमपि। ब्रह्मभावापेक्षयापीत्यर्थः। परिच्छेदत्यागं विना ब्रह्मत्वासंभवात् तत्त्यागे
पास्यत्वमायातीति भावः। विभोः परिच्छेदोक्तौ दृष्टान्तमाह—**यथा समस्तेति**। सर्वेश्वरस्यायोध्यायां स्थिर
दोक्तिवदल्पहृदि ध्येयत्वेन तथोक्तिरित्यर्थः। ननु किमिति हृदयमेव प्रायेणोच्यते, तत्राह—**तत्रेति**। हृ
बुद्धिवृत्तिर्ग्राहिका भवति। अत ईश्वराभिव्यक्तिस्थानत्वात्तदुक्तिरित्यर्थः। व्योमदृष्टान्तासिना शङ्कालतापि छिन्ना

भामतीव्याख्या

तादृशां च जीवानामविद्या, नतु निरुपाधिनो ब्रह्मणः। न चाविद्यायां सत्यां जीवात्मविभागः, सति च जीव
श्रयाऽविद्येत्यन्योन्याश्रयमिति सांप्रतम्। अनादित्वेन जीवाविद्ययोर्बीजाङ्कुरवदनवकॢप्तेरयोगात्। न च सर्वज्ञस्य
कुतोऽकस्मात्संसारिता, यो हि परतन्त्रः सोऽन्येन बन्धनागारे प्रवेश्येत, नतु स्वतन्त्र इति वाच्यम्। नहि
संप्रतितनी बन्धनागारप्रवेशिता, येनानुयुज्येत, किंत्वियमनादिः पूर्वपूर्वकर्माविद्यासंस्कारनिबन्धना नानुयोगमर्हति
ईश्वरस्यानीशता न ह्युपकरणाद्यपेक्षिता कर्तुः स्वातन्त्र्यं विहन्ति। तस्माद्यत्किंचिदेतदपीति ॥ ६ ॥ ७ ॥

आनन्दगिरीयव्याख्या

यति—**यथेति**। श्रुतौ स्मृतौ च कर्मकर्तृत्वादिव्यवहारात्पारमार्थिक एव भेद इत्याशङ्क्याह—**तदिति**।
तात्त्विकत्वमाशङ्क्य प्रागूर्ध्वं वा बोधाद्बाध इति विकल्प्याद्यमनुजानाति—**प्रागिति**। द्वितीयं प्रत्याह—**गृहीते**
जैवं लिङ्गद्वयं निरस्यति—**अर्भकेति**। अर्भकमोको यस्य सोऽर्भकौकास्तस्य भावस्तत्त्वं तस्मादिति यावत्।
विषयत्वनिषेधार्थमल्पमिति पर्यायत्वोक्तिः। ओकःशब्दस्याप्रसिद्धार्थतां व्यवच्छिनत्ति—**नीडमिति**। वाक्यार्थं वदन्
एष इति। तत्र लिङ्गयोः संभावनार्थं विशिनष्टि—**आराग्रेति**। परत्र तदसंभावनार्थम्—**सर्वगत इति**। तस्यानुप
दिति। परिहारभागमवतारयति—**अत्रेति**। अणीयस्त्वमुपेत्य ज्यायस्त्वं वा बाध्यं, तदपि वा कथंचिदनुगन्तव्यम्।
बाधायोगादित्याह—**नायमिति**। द्वितीयं प्रत्याह—**न तावदिति**। त्वयापि ज्यायस्त्वमुपेत्याणीयस्त्वं बाध्यते,
गम्यते। नाद्यः, श्रुतबाधायोगसाम्यात्। न द्वितीयः, ज्यायसोऽणीयस्त्वस्य सर्वथैवायुक्तत्वात्, तत्राह—**सर्वेति**।
परिच्छिन्नदेशोक्तौ दृष्टान्तमाह—**समस्तेति**। तत्र पुरवासापेक्षया व्यपदेशेऽपि कथमिहेति पृच्छति—**कयेति**।
व्याचष्टे—**निचाय्यत्वादिति**। सर्वगतस्य कथमेकदेशे द्रष्टव्यत्वं, तत्राह—**यथेति**। तत्र शास्त्रप्रामाण्यात्
तत्राह—**तत्रेति**। बुद्धिविज्ञानमित्यन्तःकरणस्य प्रमाणजा वृत्तिरुक्ता। सर्वगतस्य कुतो हृदय एव मानग्राह्यत्वं,
अपरिच्छिन्नस्य परिच्छिन्नायतनत्वादिव्यपदेशं सौत्रोदाहरणेन साधयति—**व्योमवदिति**। ब्रह्मापि हृदयापेक्षया
दार्ष्टान्तिकमुपसंहरति—**तदेवमिति**। हृदयायतनस्यातात्त्विकत्वे चोद्यान्तरमपि निरस्तमित्याह—**तत्रेति**। नहि

प्रतिशरीरं भिन्नत्वाद्भिन्नायतनानां च शुकादीनामनेकत्वसावयवत्वानित्यत्वादिदोषदर्शना-ब्रह्मणोऽपि तद्वत्प्रसङ्ग इति, तदपि परिहृतं भवति ॥ ७ ॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

योमवत्सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसंबन्धात्, चिद्रूपतया च शारीरादविशिष्टत्वात्, सुख-दुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येत। एकत्वाच्च। नहि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते, 'नान्योऽतोऽस्ति विज्ञाता' (बृ० ३।७।२३) इत्यादिश्रुतिभ्यः। तस्मात्परस्यैव संसारिसंभोगप्राप्तिरिति चेत्, न। वैशेष्यात्। न तावत्सर्वप्राणिहृदयसंबन्धाच्छारीरवद्ब्रह्मणः संभोगप्रसङ्गः, वैशेष्यात्। विशेषो हि भवति शारीरपरमेश्वरयोः। एकः कर्ता भोक्ता धर्माधर्मसाधनः सुखदुःखादिमांश्च। एकस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः। एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्य। यदि च संनिधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्यसंबन्धोऽभ्युपगम्येत, आकाशादीनामपि दाहादिप्रसङ्गः। सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ। यदप्येकत्वाद्ब्रह्मण आत्मान्तराभावाच्छारीरस्य भोगेन ब्रह्मणो भोगप्रसङ्ग इति। अत्र वदामः—इदं तावद्देवानांप्रियः प्रष्टव्यः। कथमयं त्वयात्मान्तराभावोऽध्यवसित इति। 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'नान्योऽतोऽस्ति विज्ञाता' इत्यादिशास्त्रेभ्य इति चेत्, यथाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यो न तत्रार्धजरतीयं लभ्यम्। शास्त्रं च 'तत्त्वमसि' इत्यपहतपाप्मत्वादिविशेषणं ब्रह्म शारीरस्यात्मत्वेनोपदिशच्छारीरस्यैव तावदुपभोक्तृत्वं वारयति। कुतस्तदुपभोगेन ब्रह्मण उपभोगप्रसङ्गः। अथागृहीतं शारीरस्य ब्रह्मणैकत्वं तदा मिथ्याज्ञाननिमित्तः शारीरस्योपभोगः, न

---

रत्नप्रभाव्याख्या

शङ्क्यत इत्यादिना। भिन्नायतनत्वेऽपि व्योम्नः सत्यभेदाद्यभावादिति भावः ॥ ७ ॥ ब्रह्मणो हार्दत्वे संभोगापत्तेर्जीव एव हार्द उपास्य इति शङ्कां व्याचष्टे—व्योमवदिति। ब्रह्म भोक्तृ स्यात्, हार्दत्वे सति चेतनत्वात्, जीवाभिन्नत्वाच्च जीववदित्युक्तं निरस्यति—न वैशेष्यादिति। धर्माधर्मवत्त्वमुपाधिरित्यर्थः। अयमेव विशेषो वैशेष्यम्। स्वार्थे ष्यञ्प्रत्ययः। विशेषस्यातिशयार्थो वा। धर्मादेः स्वाश्रये फलहेतुत्वमतिशयः, तस्मादिति सूत्रार्थः। किंच विभवो आत्मान इति वादिनामेकस्मिन्देहे सर्वात्मनां भोक्तृत्वप्रसङ्गः, स्वकर्मार्जित एव देहे भोग इति परिहारश्च तुल्य इति पर्यनुयोज्या इत्याह—सर्वगतेति। वस्तुतस्तेषामेव भोगसांकर्यमित्यग्रे वक्ष्यते। ब्रह्मणो जीवाभिन्नत्वं श्रुत्या तेन भोक्तृत्वानुमाने उपजीव्यश्रुतिबाधमाह—यथाशास्त्रमिति। अर्धं मुखमात्रं जरत्या वृद्धायाः कामयते नेति सोऽयमर्धजरतीयन्यायः। स चात्र न युक्तः। न ह्यभेदमर्धं भोक्तृत्वं त्यक्तुं युक्तं, श्रुत्यैवाभेदसिद्ध्यर्थं तद्वारणादित्याह—शास्त्रं चेति। नन्वेकत्वं मया श्रुत्या न गृहीतं, येनोपजीव्यबाधः स्यात्। किंतु त्वदुक्त्या गृहीतमित्यत आह बिम्बप्रतिबिम्बयोः कल्पितभेदेन भोक्तृत्वाभोक्तृत्वव्यवस्थोपपत्तेरप्रयोजको हेतुरित्याह—अथागृहीतमित्या-

भामतीव्याख्या

भिधानमात्यन्तिकं विशेषं प्रतिपादयितुम्। तथाप्यविद्याकल्पितः सुखादिसंभोगोऽविद्यात्मन एव जीवस्य युज्यते। ननु

आनन्दगिरीयव्याख्या

वादि युक्तं, व्योम्नोऽदृष्टेरिति भावः ॥ ७ ॥ हार्दत्वे ब्रह्मणोऽनिष्टप्रसङ्गाज्जीवस्यैव हार्दस्योपास्यतेति शङ्कित्वा समाधत्ते—संभो-। चोद्यं प्रपञ्चयति—व्योमवदिति। सर्वबुद्धिसंबन्धेऽपि नभोवद्भोगनाशङ्क्योक्तम्—चिदिति। तथापि भोगहेतुसंबन्धस्यैव नेतरस्येत्याशङ्क्याह—एकत्वाच्चेति। तत्प्रपञ्चयति—नहीति। अनिष्टप्रसङ्गं निगमयति—तस्मादिति। उत्तरमादत्ते—नेति। बुद्धिस्थत्वे सति चैतन्याद्ब्रह्मणो भोक्तृत्वं जीववदिति, तत्राह—न तावदिति। हेतुं विवृणोति—विशेषो हीति। धर्माधर्मवत्त्व-भोगप्रयोजकत्वादप्रयोजको हेतुरित्यर्थः। उक्तवैशेष्यफलमाह—एतस्मादिति। साधनव्याप्तिमाशङ्क्य 'अन्यत्र धर्मात्' इत्यादिविरोधान्नैवमित्याह—यदि चेति। किंच जीवा विभवो बहवश्चेति स्थितावेकस्मिन्देहदेशे सर्वसंनिधिविशेषात्तुल्यो भोगः स्यात् ... स्यापि। स्वकर्मार्जिते देहे भोगो नान्यत्रेति चेद्वयमपि तथैवाभिदधीमहीत्याह—सर्वेति। ब्रह्मणो भोक्त्रभिन्नत्वाद्भोक्तृत्वमित्युक्तमनुभाषयदपीति। तत्र प्रतिवक्तुं वायुरित्याह—अत्रेति। तद्युक्तिं वक्तुं पृच्छति—इदमिति। किमेकत्वमप्रमाणं शास्त्रं वा। आद्ये, हेत्वसिद्धिर्विति, तत्रेदमुक्तं शास्त्राद्धेति प्रश्नमेव प्रकटयति—कथमिति। अन्त्यमादत्ते—तत्त्वमिति। शास्त्रानुसरणे तदसिद्धिलक्षणमयुक्तमित्याह—यथेति। नहि कुक्कुट्यादेरेकदेशो भोगाय पच्यते एकदेशस्तु प्रसवाय कल्प्यते, विरोधादित्याह—नेति। ऐक्यं बोधयदपि शास्त्रं संसारं वारयति। तत्कथमर्धजरतीयप्रसक्तिरित्याशङ्क्याह—शास्त्रं चेति। संसारिणो ब्रह्मैक्यबोधनायोगाज्जीवस्य संसारित्वनिरास-

तेन परमार्थरूपस्य ब्रह्मणः संस्पर्शः। नहि बालैस्तलमलिनतादिभिर्व्योम्नि विकल्प्यमाने परम... लिनतादिविशिष्टमेव परमार्थतो व्योम भवति। तदाह—न वैशेष्यादिति। नैकत्वेऽपि ... रस्योपभोगेन ब्रह्मण उपभोगप्रसङ्गः, वैशेष्यात्। विशेषो हि भवति मिथ्याज्ञानसम्यग्ज्ञानयोः। मिथ्याज्ञानकल्पित उपभोगः, सम्यग्ज्ञानदृष्टमेकत्वम्। नच मिथ्याज्ञानकल्पितेनोपभोगेन सम्यग्ज्ञानदृष्टं वस्तु संस्पृश्यते। तस्मान्नोपभोगगन्धोऽपि शक्य ईश्वरस्य कल्पयितुम्॥८॥

## अत्ता चराचरग्रहणात्॥ ९॥



जीवोऽग्निरीशो वात्तास्यादोदने जीव इष्यताम्। स्वाद्वत्तीति श्रुतेर्वह्निर्वाग्निरन्नाद इत्यपि॥ ब्रह्मक्षत्रादिजगतो भोज्यत्वात्स्यादिहेश्वरः। ईशप्रश्नोत्तरत्वाच्च संहारस्तस्य चात्तृता॥

कठवल्लीषु पठ्यते—'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' (१।२।२४) इति। अत्र कश्चिदोदनोपसेचनसूचितोऽत्ता प्रतीयते। तत्र किमग्निरत्ता स्यात्, उत जीवः, अथवा परमात्मेति संशयः। विशेषानवधारणात्। त्रयाणां च ...

रत्नप्रभाव्याख्या

दिना। कल्पितासङ्गित्वमधिष्ठानस्य वैशेष्यमित्यस्मिन्नर्थेऽपि सूत्रं पातयति—तदाहेति। ब्रह्मणो हार्दत्वाद्ब्रह्म... च्छाण्डिल्यविद्यावाक्यं ब्रह्मण्युपास्ये समन्वितमिति सिद्धम्॥ ८॥ अत्ता चराचरग्रहणात्। यस्य ब्रह्म ... दनः, मृत्युः सर्वप्राणिमारकोऽपि यस्योपसेचनमोदनसंस्कारकघृतप्रायः, सोऽत्ता यत्र शुद्धे चिन्मात्रेऽभेदेन ... तच्छुद्धं ब्रह्म इत्था इत्थं ईश्वरस्याप्यधिष्ठानभूतं को वेद। चित्तशुद्धयाद्युपायं विना कोऽपि न जानाती... बीजमाह—विशेषेति। 'स त्वमग्निं प्रब्रूहि' इत्यग्नेः, 'येयं प्रेते विचिकित्सा' इति जीवस्य, 'अन्यत्र धर्मात्' ... प्रश्नः। 'लोकादिमग्निं तमुवाच' इत्यग्नेः, 'हन्त त इदं प्रवक्ष्यामि' इतीतरयोः प्रतिवचनमुपलभ्यत इ...

भामतीव्याख्या

निर्मृष्टनिखिलाविद्यातद्वासनस्य शुद्धबुद्धमुक्तस्वभावस्य परमात्मन इत्यर्थः। शेषमतिरोहितार्थम्॥ ८॥ अत्ता चराचर... कठवल्लीषु पठ्यते—यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था ... स इति। अत्र चादनीयौदनोपसेचनसूचितः कश्चिदत्ता प्रतीयते। अत्तृत्वं च भोक्तृता या संहर्तृता ... नच प्रस्तुतस्य परमात्मनो भोक्तृतास्ति, 'अनश्नन्नन्योऽभिचाकशीति' इति श्रुत्या भोक्तृताप्रतिषेधात्। जीवात्मनो ... धानात्—'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति। तद्यदि भोक्तृत्वमत्तृत्वं ततो मुक्तसंशयं जीवात्मैव प्रतिपत्तव्यः। ... कार्यकारणसंघातो भोगायतनतया या साक्षाद्वा संभवति भोग्यम्। अथ तु संहर्तृता भोक्तृता, ततस्त्रयाणामग्निजीव... पन्यासोपलब्धेः संहर्तृत्वस्याविशेषाद्भवति संशयः—किमत्ता अग्निराहो जीव उताहो परमात्मेति। तत्रौदनस्य ... प्रसिद्धेर्भोक्तृत्वमेव प्रथमं बुद्धौ विपरिवर्तते, चरमं तु संहर्तृत्वमिति भोक्तैवात्ता। तथा स जीव एव। 'न जायते ... तस्यैव स्तुतिः। संहारकालेऽपि संस्कारमात्रेण तस्यावस्थानात्। दुर्ज्ञानत्वं च तस्य सूक्ष्मत्वात्। तस्माज्जीव एवात्तेति प्राप्तम्। यदि तु संहर्तृत्वमत्तृत्वं तथाप्यग्निरत्ता, 'अग्निरन्नादः' इति श्रुतिप्रसिद्धिभ्याम्। एवं प्राप्तेऽभिधीयते—अ... कुतः, चराचरग्रहणात्। 'उभे यस्यौदनः' इति 'मृत्युर्यस्योपसेचनम्' इति च श्रूयते। तत्र यदि जीवस्य भोग... धनतया च कार्यकारणसंघातः स्थितः, न तद्यौदनः। नह्योदनो भोगायतनं, नापि भोगसाधनं, अपि तु भोग्यः ...

आनन्दगिरीयव्याख्या

द्वारा शास्त्रमैक्यं बोधयति, अबोधितपदार्थस्य वाक्यार्थज्ञानाभावादित्यर्थः। त्वदुक्तैरैक्यं ज्ञातं न शास्त्रादिति द्वितीयमुत्थाप्य... तत्र वास्तवे भोक्तृत्वे साध्ये साध्यवैकल्यं, अवास्तवे सिद्धसाध्यतेति मत्वाह—तदेति। तदेव दृष्टान्तेनाह—नहीति। ... गमकतायं योजयति—तदाहेति। तयोर्विशेषेऽपि कथं ब्रह्मणि वस्तुतो भोगाभावः, तत्राह—नचेति। हेतुफलयोर्... तस्मान्नेति। मनोमयत्वादिविशिष्टस्येश्वरस्य ध्यानार्थं हार्दत्वेऽपि निर्दोषत्वात्तस्मिन्नेव शाण्डिल्यविद्यावेद्य 'सर्वम्' ... न्वितमित्यर्थः॥ ८॥ ईश्वरस्याभोक्तृत्वे नात्तृत्वमपीत्याशङ्क्याह—अत्तेति। उदाहरति—कठेति। यस्य परस्यात्मन ... चोभे जाती प्रसिद्धाववोदनौ भवतः, यस्य मृत्युः सर्वमारकः सन्नुपसेचनमोदनमिश्रघृतवत्तिष्ठति, यत्र सोऽत्ता ... सं निर्विशेषमात्मानं 'नाविरतो दुश्चरितात्' इतिमन्त्रोक्तोपायवान्यथा वेदेत्थमनन्यस्तद्रहितो न वेदेत्यर्थः। अत्तुरग्न्यादि... तेत्याशङ्क्याह—अत्रेति। सिद्धेऽत्तरि विचारमूलं संशयमाह—तत्रेति। विशेषानवधारणोत्थः संशयस्त्रिष्वेव कथं निर्धार्य... त्रयाणामिति। 'स त्वमग्निम्' इत्यादिरग्नेः, 'येयं प्रेते विचिकित्सा' इत्यादिर्जीवस्य, 'अन्यत्र धर्मात्' इत्यादिर्ब्रह्मणः प्रश्नः... मपि 'लोकादिमग्निम्' इत्यादग्नेः, 'हन्त त इदम्' इत्यादीतरयोरेवं त्रयाणामेव तयोरिहोपलब्धेस्त्रिष्वेव संशयः, विशेषा...

मात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति । यथा 'पुष्करपलाश आपो न श्लिष्यन्त एवंविदि पापं कर्म न श्लिष्यते' ( छा० ४।१४।३ ) इति चाक्षिस्थानं पुरुषं विजानतः पापेनोपघातं ब्रुवन्नक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति । तस्मात्प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां संयद्वामादिगुणतां चोक्त्वाऽर्चिरादिकां तद्विदो गतिं वक्ष्यामीत्युपक्रमते—'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' ( छा० ४।१५।१ ) इति ॥ १५ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्चाक्षिस्थानः पुरुषः परमेश्वरः, यस्माच्छ्रुतोपनिषत्कस्य श्रुतरहस्यविज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ—'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्त एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते' ( प्र० १।१० ) इति । स्मृतावपि—'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' ( गी० ८।२४ ) इति । सैवेहाक्षिपुरुषविदोऽभिधीयमाना

---

### रत्नप्रभाव्याख्या

भेद इत्यर्थः ॥ १५ ॥ श्रुता अनुष्ठिता उपनिषत् रहस्यं सगुणब्रह्मोपासनं येन तस्य या गतिः श्रुतौ स्मृतौ प्रसिद्धा तस्या अत्राभिधानाल्लिङ्गादिति सूत्रार्थमाह—इतश्चेति । यस्मादृश्यते तत्तस्मादिहेत्यन्वयः । श्रुतिमाह—अथेति । देहपातानन्तरमित्यर्थः । स्वधर्मस्तपः तपोब्रह्मचर्यश्रद्धाविद्याभिरात्मानं ध्यात्वा तया ध्यानविद्ययोत्तरं देवयानमार्गं प्राप्य पथा । आदित्यद्वारा सगुणब्रह्मस्थानं गच्छन्ति, एतद्वै ब्रह्म प्राणानां व्यष्टिसमष्टिरूपाणामायतनं लिङ्गात्मकं हिरण्यगर्भाख्यं तस्यैतदमृतादिरूपं निर्गुणं सर्वाधिष्ठानम् । अतः कार्यं ब्रह्म प्राप्य तत्स्वरूपं निर्गुणं ज्ञात्वा मुच्यन्त इत्यर्थः । अर्चिरादय एवमहराद्या देवता एव स्मृतावुक्ताः । अस्मिन्नुपासके मृते सति यदि पुत्रादयः शव्यं शवसंस्कारादिकं कुर्वन्ति यदि वा न कुर्वन्ति उभयथाप्युपास्तिमहिम्ना अर्चिरादिदेवान्क्रमेण गच्छन्ति । अर्चिषमग्निं, ततोऽहः, अह्नः शुक्लपक्षं,

### भामतीव्याख्या

योऽर्चिरादिकां गतिं वक्तुमनाः, यदुक्तमग्निभिः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति तत्पूरणाय 'एषोऽक्षिणि पुरुषो दृश्यते' इत्यादि । एतदुक्तं भवति—आचार्येण ये सुखं ब्रह्माक्षिस्थानं संयद्वामं वामनीभामनीत्येवंगुणकं प्राणसहितमुपासते ते सर्वे यदि शवकर्म कुर्वन्तु मा वाकार्षुः, अर्चिषमर्चिरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते, अर्चिषोऽहरहर्देवतां, अह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतां, ततः षण्मासान्, येषु मासेषूत्तरां दिशमेति सविता ते षण्मासा उत्तरायणं तद्देवतां प्रतिपद्यन्ते, मासेभ्यः संवत्सरदेवतां, तत आदित्यं, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्र स्थितानेतान्पुरुषः कश्चिद्ब्रह्मलोकादमानवो नव्यां सृष्टौ भवः । ब्रह्मलोकभव इति यावत् । स तादृशः पुरुष एतान्सत्यलोकस्थं कार्यं ब्रह्म गमयति, स एष देवपथो देवैरर्चिरादिभिर्नेतृभिरुपलक्षित इति देवपथः, स एव च ब्रह्मणा गन्तव्येनोपलक्षित इति ब्रह्मपथः, एतेन पथा प्रतिपद्यमाना गच्छन्तो ब्रह्म इमं मानवं मनोः सर्गं किं भूतमावर्तं जन्मजरामरणपौनःपुन्यमावृत्तिस्तत्कर्तावर्तो मानवो लोकस्तं नावर्तन्ते । तथा च 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ १५ ॥ तदनेनोपाख्यानक

### आनन्दगिरीयव्याख्या

भेदेऽप्येकवाक्यता, साकाङ्क्षत्वात् । पूर्वोत्तरवाक्ययोरेकार्थत्वं, वाक्यैक्यसंभवे तद्भेदस्यायोगादित्यर्थः । फलोक्तेरपि लिङ्गत्वमित्याह—यथेति । प्रकृतपुरुषविदो हि पापाद्यनुपहतत्वं फलमुक्तं, तच्च तदधिगमाधिकरणे ब्रह्मधियोऽभिधास्यते इत्यर्थः । आचार्येण गतिमात्रे वाच्ये किमित्यधिकं सोऽभिदधीतेत्याशङ्क्यापेक्षितं पूरयित्वा गतिर्वाच्येत्युपसंहरति । पूर्वापरालोचनायामेकवाक्यत्वनिश्चयादित्यर्थः ॥ १५ ॥ प्रकरणादक्षिस्थस्य ब्रह्मत्वमुक्त्वा लिङ्गादपि तथेत्याह—श्रुतेति । श्रुतमुपनिषद्रहस्यं ज्ञानं यस्य स तथा, तस्य या देवयानाख्या गतिरागमसिद्धा तस्याश्चाक्षिपुरुषवेदिन्यभिधानात्तद्ब्रह्मत्वमित्यर्थः । इतश्चेति । अवशिष्टं व्याचष्टे—यस्मादिति । या गतिः श्रुतौ स्मृतौ च प्रसिद्धा सैवेहाभिधीयमानेति संबन्धः । अथेति । देहपातानन्तर्यमथशब्दार्थः । तपोब्रह्मचर्याद्युपायेनात्मानमनुसंधाय तद्विद्यया ध्यानाख्यया हेतुनोत्तरं मार्गं प्राप्य तेनादित्यद्वारा कार्यं ब्रह्माप्नुवन्तीत्यर्थः । ब्रह्म विशिनष्टि—एतदिति । व्यष्टिसमष्टिकरणात्मकं हैरण्यगर्भं ब्रह्म तस्य वास्तवं रूपमाह—एतदिति । उक्तविशेषणसिद्ध्यर्थं हेतुमाह—एतस्मादिति । गतिविषयां श्रुतिमुक्त्वा स्मृतिमाह—अग्निरिति । अग्न्यादिशब्दैर्गतिवाहिक्यो देवता गृह्यन्ते । पथ्यन्तराद्व्यवच्छेदार्थं विशेषमाह—तत्रेति । पथो देवयानस्य प्रामाणिकत्वेऽपि प्रकृते किमायातमित्याशङ्क्योक्तम्—सैवेति । इहेत्युक्तां श्रुतिमाह—अथेति । देहपातानन्तर्यमथार्थ इत्युक्तम् । अस्मिन्नुपासके आरब्धभोगान्ते मृते पुत्रा ज्ञातयो वा शव्यं शवसंबन्धि संस्कारादिकर्म कुर्वन्ति यदि वा न कुर्वन्ति द्विधाप्यप्रतिहतधीफलास्तेऽर्चिरभिमानिनीं

थ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति' इत्युपक्रम्य 'आदित्याच्च-
न्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रति-
पद्यमाना इमं मानवमावर्तं नावर्तन्ते' ( छा० ४।१५।५ ) इति । तदिह ब्रह्मविद्विषयया प्रसिद्धया
त्याक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ॥ १६ ॥

## अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

त्पुनरुक्तं छायात्मा, विज्ञानात्मा, देवतात्मा वा स्यादक्षिस्थान इति । अत्रोच्यते—न छायात्मा-
दिरितर इह ग्रहणमर्हति । कस्मात्, अनवस्थितेः । न तावच्छायात्मनश्चक्षुषि नित्यमवस्थानं
भवति । यदैव हि कश्चित्पुरुषश्चक्षुरासीदति तदा चक्षुषि पुरुषच्छाया दृश्यते, अपगते तस्मिन्न
दृश्यते । 'य एषोऽक्षिणि पुरुषः' इति च श्रुतिः संनिधानात्स्वचक्षुषि दृश्यमानं पुरुषमुपास्यत्वे-
नोपदिशति । नचोपासनाकाले छायाकरं कंचित्पुरुषं चक्षुःसमीपे संनिधाप्योपास्त इति युक्तं
कल्पयितुम् । 'अस्यैव शरीरस्य नाशमन्वेष नश्यति' ( छा० ८।९।१ ) इति श्रुतिश्छायात्मनो-
ऽप्यनवस्थितत्वं दर्शयति । असंभवाच्च । तस्मिन्नमृतत्वादीनां गुणानां न छायात्मनि प्रतीतिः ।
तथा विज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसंबन्धे सति चक्षुष्येवावस्थितत्वं वक्तुं न
शक्यम् । ब्रह्मणस्तु व्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेषसंबन्धः । समानश्च विज्ञाना-
त्मन्यप्यमृतत्वादीनां गुणानामसंभवः । यद्यपि विज्ञानात्मा परमात्मनोऽनन्य एव, तथाप्यवि-
द्याकामकर्मकृतं तस्मिन्मर्त्यत्वमध्यारोपितं भयं चेत्यमृतत्वाभयत्वे नोपपद्येते । संयद्वामत्वादय-

रत्नप्रभाव्याख्या

संवत्सरं, ततो देवलोकं, ततो वायुं, वायोरादित्यं, ततश्चन्द्रं, चन्द्राद्विद्युतं गत्वा तत्र विद्युल्लोके स्थितानुपासकान्
पुरुषो ब्रह्मलोकादागत्य कार्यं ब्रह्मलोकं प्रापयति । एषोऽर्चिरादिभिर्देवैर्विशिष्टो देवपथो गन्तव्येन ब्रह्मणा योगाद्ब्रह्म-
। एतत्कार्यं ब्रह्म प्रतिपद्यमाना उपासका इमं मानवं मनोः सर्गं आवर्तं जन्ममरणावृत्तियुक्तं नावर्तन्ते नागच्छ-
र्थः ॥ १६ ॥ चक्षुरासीदतीति । उपगच्छतीत्यर्थः । अनवस्थितस्योपास्यत्वं सदा न सिद्ध्यतीति भावः । किंचान्य-
स्याक्षिस्थ उपास्यः । नच तस्य स्वचक्षुषा दर्शनं संभवतीत्याह—य एष इति । अस्तु तर्हि परेण दृश्यमानस्यो-
रित्यत आह—नचेति । कल्पनागौरवादित्यर्थः युक्तिसिद्धानवस्थितत्वे श्रुतिमाह—अस्येति । छायाकरस्य बिम्बस्य
दर्शनमनुसृत्यैष छायात्मा नश्यतीत्यर्थः । जीवं निरस्यति—तथेति । जात्यन्धस्याप्यहमित्यविशेषेण जीवस्याभिव्यक्ते-
न स्थानमित्ययुक्तमित्यर्थः । दृष्ट इति । श्रुताविति शेषः । ननु 'चक्षोः सूर्यो अजायत' 'सूर्योऽस्तमेति' इति वाक्यं

भामतीव्याख्या

त्कगत्यभिधानाच्च इत्यपि सूत्रं व्याख्यातम् ॥ १६ ॥ अनवस्थितेरसंभवाच्च नेतरः । 'य एषो-
इति नित्यवच्छ्रुतमनित्ये छायापुरुषे नावकल्पते । कल्पनागौरवं चास्मिन्पक्षे प्रसज्यत इत्याह—नचोपास-
ल इति । तथा विज्ञानात्मनोऽपीति । विज्ञानात्मनो हि न प्रदेशे उपासनाऽन्यत्र दृष्टचरी, ब्रह्मणस्तु तत्र

आनन्दगिरीयव्याख्या

—यदु चेति । अर्चिषोऽहर्देवतां ततः शुक्लपक्षदेवतां ततः षण्मासोपलक्षितोत्तरायणदेवतां ततः संवत्सराभिमानिनीं देवतां
दित्यं ततश्चन्द्रं ततो विद्युतमाप्नुवन्ति । ततस्तत्र स्थितानुपासकान्ब्रह्मलोकादागत्यामानवः पुरुषो गन्तव्यं ब्रह्म प्रापयतीत्याह—
क्रम्येति । देवैर्नेतृभिरधिष्ठितः पन्था देवपथः । ब्रह्मणा गन्तव्यत्वेनोपलक्षितो ब्रह्मपथः । एतेन पथा कार्यं ब्रह्म प्रतिपद्यमानाः
मनोः सर्गं जन्ममरणाद्यावृत्तियुक्तं नावर्तन्ते न प्रविशन्तीत्याह—एष इति । तथापि प्रकृते किं जातं, तदाह—तदिति ।
मेदेत्युक्तम् ॥ १६ ॥ सिद्धान्तमुपपाद्य परोक्तं प्रत्याह—अनवस्थितेरिति । तद्व्याकर्तुं व्याख्येयमनुकीर्तयति—यदिति । सूत्र-
न योजयति—अत्रेति । इहेति स्थानं वाक्यं चोक्तम् । प्रश्नपूर्वकं हेतुं छायात्मनि व्याचष्टे—कस्मादिति । उक्तमन्वयव्य-
र्थां व्यनक्ति—यदेति । स्वचक्षुषि नित्यं संनिध्यभावेऽपि यत्र क्वापि छायात्मनः संभवादुपास्यतेत्याशङ्क्याह—य इति ।
इत्युक्ते स्वेनान्येन वेत्यविशेषाच्छ्रुतत्वाच्च प्रथमश्रुतमक्षि स्वकीयमेव युक्तं, संनिधेः स्वस्मिन्नतिशयादित्याह—संनिधाना-
। तर्हि पुरुषान्तरं संनिधाप्य स्वचक्षुषि तद्दृश्यस्योपास्यता स्यादित्याशङ्क्य गौरवान्नेत्याह—नचेति । युक्त्यानवस्थितत्वमुक्त्वा
श्रुतिमाह—अस्येति । छायाकरस्येत्यर्थः । आनन्तर्यार्थोऽनुशब्दः । एषशब्दश्छायात्मार्थः । हेत्वन्तरमादाय व्याचष्टे—असं-
ति । जीवनिरासेऽप्यनवस्थितिं व्याचष्टे—तथेति । छायात्मवदित्यर्थः । नहि तस्य चक्षुष्येव व्यक्तियोग्यता, येन तत्रोपास्तिः ।
स्थानविशेषमहमिति व्यक्तेरित्यर्थः । तर्हि ब्रह्मणोऽपि सर्वत्र सत्त्वान्न चक्षुष्येव स्थितिः, तत्राह—ब्रह्मणस्त्विति । दृष्टः । अना-
। हेत्वन्तरं जीवेऽपि योजयति—समानश्चेति । जीवस्य ब्रह्माभेदात्तस्यामृतत्वादि स्यादित्याशङ्क्याह—यद्यपीति । अनव-

श्चैतस्मिन्ननैश्वर्यादनुपपन्ना एव । देवतात्मनस्तु 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' इति चक्षुष्यवस्थानं स्यात्तथाप्यात्मत्वं तावन्न संभवति, पराग्रूपत्वात् । अमृतत्वादयो वन्ति, उत्पत्तिप्रलयश्रवणात् । अमरत्वमपि देवानां चिरकालावस्थानापेक्षम् । ऐश्वर्यं श्वरायत्तं न स्वाभाविकम् । 'भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्च मृत्युर्धावति पञ्चमः' (तै० २।८) इति मन्त्रवर्णात् । तस्मात्परमेश्वर एवायमक्षिस्थः तव्यः । अस्मिंश्च पक्षे दृश्यत इति प्रसिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थं व्याख्येयम् ॥ १७ ॥

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥




प्रधानं जीव ईशो वा कोऽन्तर्यामी जगत्प्रति ॥ कारणत्वात्प्रधानं स्याज्जीवो वा कर्तृ जीवेकत्वामृतत्वादेरन्तर्यामी परेश्वरः ॥ द्रष्टृत्वादेर्न प्रधानं न जीवोऽपि नियम्यतः ॥

'य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति' इत्युपक्रम्य श्रूयते— 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' (बृह० ३।७।१,२) इत्यादि । अत्राधिदैवतमधिलोकमधिवेद

### रत्नप्रभाव्याख्या

अमरा देवा इति प्रसिद्धिर्बाधितमित्याशङ्क्याह—**अमरत्वमपीति** । भीषा भयेनास्मादीश्वराद्वायुश्चलति । कार्यं कुरुतः । उक्तापेक्षया पञ्चमो मृत्युः समाप्तायुषां निकटे धावतीत्यर्थः । ईश्वरपक्षे दृश्यत इत्युक्तं, स्मिन्निति । दर्शनमनुभवः । तस्य शास्त्रे श्रुतस्य शास्त्रमेव करणं कल्प्यं, संनिधानात् । तथाच शास्त्र उपासना स्तुत्यर्थं उच्यत इत्यर्थः । तस्मादुपकोसलविद्यावाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धम् ॥ **म्यधिदैवादिषु तद्धर्मव्यपदेशात्** । बृहदारण्यकवाक्यमुदाहरति—**य इति** । अन्तर्यामिब्राह्मणे अत्रेति । 'यः पृथिव्याम्' इत्यादिना देवताः पृथिव्याद्या अधिकृत्य यमयिता श्रूयते । तथा 'यः सर्वेषु

### भामतीव्याख्या

श्रुतपूर्वेत्यर्थः । भीषा भिया । अस्मात् ब्रह्मणः । शेषमतिरोहितार्थम् ॥ १७ ॥ **अन्तर्याम्यधिदैवा व्यपदेशात्** । 'स्वकर्मोपार्जितं देहं तेनान्यच्च नियच्छति । तथादिरशरीरस्तु नात्मान्तर्यामितां भजेत् ॥ १ ॥' हि कार्यं चेतनस्य शरीरिणः स्वशरीरेन्द्रियादौ वा शरीरेण वा वास्यादौ दृष्टं नाशरीरस्य ब्रह्मणो भवितुमर्हति । कुरः कुटजबीजाज्जायते । तदनेन 'जन्माद्यस्य यतः' इत्येतदप्याक्षिप्तं वेदितव्यम् । तस्मात्परमात्मनः शरीरे र्यामित्वाभावात्, प्रधानस्य वा पृथिव्याद्यभिमानवत्या देवताया वाणिमाद्यैश्वर्ययोगिनो योगिनो वा जीवात्मनो तत्र यद्यपि प्रधानस्यादृष्टत्वाश्रुतत्वामतत्वाविज्ञातत्वानि सन्ति, तथापि तस्याचेतनस्य द्रष्टृत्वश्रोतृत्वमन्तृत्वविज्ञातृत्व वात् अनात्मत्वाच्च 'एष त आत्मा' इति श्रुतेरनुपपत्तेर्न प्रधानस्यान्तर्यामिता । यद्यपि पृथिव्याद्यभिमानिनो दे अदृष्टत्वादयश्च सह द्रष्टृत्वादिभिरुपपद्यन्ते, शरीरेन्द्रियादियोगश्च, 'पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योति

### आनन्दगिरीयव्याख्या

स्थितिर्देवतात्मन्यसिद्धेत्याशङ्क्य हेत्वन्तरेण निराह—**देवतेति** । देवेष्वमरत्वप्रसिद्धिबाधितं तदुत्पत्त्यादिवाक्यमित्याश **मिति** । संयद्वामत्वादिकमपि न तत्रेत्याह—**ऐश्वर्यमिति** । तस्येश्वरायत्तत्वे भयास्तित्वे च मानमाह—**भीषेति** । त्पवते चलति । वायुरित्यर्थः । पक्षत्रयायोगे फलितमाह—**तस्मादिति** । ईश्वरेऽपि दृश्यत इत्ययुक्तं, तस्यादृश्यत्वा **स्मिन्निति** । उपलब्धिर्दर्शनं तत्र शास्त्रीयदर्शनस्य शास्त्रमेव संनिहितं करणमिति विद्वत्प्रसिद्धं शास्त्रीयमेव दर्शनं शानामनुरागार्थमित्यर्थः । शास्त्रादीत्यादिपदं विद्वदनुभवार्थम् । तद्विषयदर्शनोक्तेरुपयोगमाह—**प्ररोचनेति** । उक्तं त्युक्ते न तद्दर्शने फलवति भवत्यभिरुचिरित्यर्थः । तदेवमुपकोसलवाक्यं सविशेषे ब्रह्मण्यन्वितमिति ॥ १७ ॥ पृथिव्यादीनि ब्रह्मणः स्थानानीत्युक्तं, तदसिद्धिमाशङ्क्याह—**अन्तर्यामीति** । अन्तर्यामिब्राह्मणमुदाहरति—**य इति** । दिभिश्चाधिष्ठितमिममम् च लोकं योऽन्तरो यमयति, यश्च लोकद्वयवर्तीनि भूतान्यन्तरः सन्यमयति, तं किं वेत्थेत्य मित्यर्थः । पृथिव्यां तिष्ठन्नन्तर्यामीत्युक्ते सर्वत्रापि चराचरे प्रसक्तावुक्तम्—**पृथिव्या इति** । तद्देवतां प्रत्याह—**यमिति** कार्यकरणस्य न नियन्तृतेत्याशङ्क्याह—**यस्येति** । नियम्यकार्यकरणैरेव नियन्तृत्वम् । फलितमाह—**य इति** । **एष इति** । ते मम चेत्यर्थः । आदिपदं 'योऽप्सु तिष्ठन्' इत्यादिसंग्रहार्थम् । आपातिकं श्रुत्यर्थमाह—**अत्रेति** ।

भूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामीति श्रूयते । स किमधिदैवाद्यभिमानी देवतात्मा कश्चित्किंवा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी किंवा परमात्मा किंवार्थान्तरं किंचिदपूर्वसंज्ञादर्शनात्संशयः । किं तावन्नः प्रतिभाति, संज्ञाया अप्रसिद्धत्वात्संज्ञिनाऽप्यप्रसिद्धेनार्थान्तरेण केनचिद्भवितव्यमिति । अथवा नानिरूपितरूपमर्थान्तरं शक्यमस्तीत्यभ्युपगन्तुम् । अन्तर्यामिशब्दश्चान्तर्यमनयोगेन प्रवृत्तो नात्यन्तमप्रसिद्धः । तस्मात्पृथिव्याद्यभिमानी कश्चिद्देवोऽन्तर्यामी स्यात् । तथाच श्रूयते—'पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः' (बृ० ३।९।१०) इत्यादि । स च कार्यकरणवत्त्वात्पृथिव्यादीनन्तस्तिष्ठन्यमयतीति युक्तं देवात्मनो यमयितृत्वम् । योगिनो वा कस्यचित्सिद्धस्य सर्वानुप्रवेशेन यमयितृत्वं स्यात् । न तु परमात्मा प्रतीयेत, अकार्यकरणत्वादित्येवं प्राप्त इदमुच्यते—योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान्नान्य इति । कुतः, तद्धर्मव्यपदेशात् । तस्य हि परमात्मनो धर्मा इह निर्दिश्यमाना

---

रत्नप्रभाव्याख्या

'यः सर्वेषु वेदेषु' इत्यधिवेदं, 'यः सर्वेषु यज्ञेषु' इत्यधियज्ञं, 'यः सर्वेषु भूतेषु' इत्यधिभूतं, 'यः प्राणे तिष्ठन्' 'य आत्मनि' इत्यन्तमध्यात्मं चेति विभागः । अशरीरस्य नियन्तृत्वसंभवासंभवाभ्यां संशयः । पूर्वत्रेश्वरस्याक्षिसिद्धये पृथिव्यादिस्थाननिर्देशो दृष्टान्त उक्तः, तस्य दृष्टान्तवाक्यस्येश्वरपरत्वमत्राक्षिप्य समाधीयत इत्याक्षेपसंगतिः । ऐक्यफलेनास्य फलवत्त्वं । अवान्तरफलं तु पूर्वपक्षे अनीश्वरोपास्तिः, सिद्धान्ते प्रत्यग्ब्रह्मज्ञानमिति मन्तव्यम् । स्वयमेवदन्पक्षान्तरमाह—अथवेति । अनिश्चितार्थे फलाभावेनाफलस्य वेदार्थत्वायोगादिति भावः । तथाच श्रूयते वेदे । यस्य देवस्यायतनं शरीरं, लोक्यतेऽनेनेति लोकश्चक्षुः, ज्योतिः सर्वार्थप्रकाशकं मन इत्यर्थः । उपक्रमादिनान्तर्याम्यैक्यादनेकदेवपक्षो न युक्त इत्यरुचेराह—योगिनो वेति । आगन्तुकसिद्धस्यान्तर्यामित्वे सिद्धसाधनकल्पनागौरवाभि-

भामतीव्याख्या

तस्य प्रतिनियतनियमनात् 'यः सर्वांल्लोकानन्तरो यमयति यः सर्वाणि भूतान्यन्तरो यमयति' इति श्रुतिविरोधादनुपपत्तेः, यद्यपि लोकभूतवशितया सर्वांल्लोकान्सर्वाणि च भूतानि नियन्तुमर्हति तत्र तत्रानेकविधदेहेन्द्रियादिनिर्माणेन 'स एकधा त्रिधा भवति' इत्यादिश्रुतिभ्यः, तथापि 'जगद्व्यापारवर्जं प्रकरणात्' इति वक्ष्यमाणेन न्यायेन विकारविषये विद्यासिद्धानां व्यापारसोऽपि नान्तर्यामी । तस्मात्पारिशेष्याज्जीव एव चेतनो देहेन्द्रियादिमान् द्रष्टृत्वादिसंपन्नः स्वयमदृश्यादिः स्वात्मनि वृत्तिविरोधात्, अमृतश्च, देहेन्द्रियादिनाशेऽप्यनाशात् । अन्यथामुष्मिकफलोपभोगाभावेन कृतविप्रणाशाकृताभ्यागमप्रसङ्गात् । 'य आत्मनि' इति चाभेदेऽपि कथंचिद्भेदोपचारात् 'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि' इतिवत् । 'यमात्मा न वेद' इति च स्वात्मनि वृत्तिविरोधाभिप्रायम् । 'यस्यात्मा शरीरम्' इत्यादि च सर्वं 'स्वे महिम्नि' इतिवद्योजनीयम् । यदि पुनरात्मनोऽपि नियन्तुरन्यो भवेत् वेदिता वा ततस्तस्याप्यन्य इत्यनवस्था स्यात् । सर्वलोकभूतनियन्तृत्वं च जीवस्यादृष्टद्वारा । तदुपार्जितौ हि धर्माधर्मौ इत्यनया द्वारा जीवो नियच्छति । एकवचनं च जात्यभिप्रायम् । तस्माज्जीवात्मैवान्तर्यामी, न परमात्मेति । एवं प्राप्ते अभिधीयते—'देहेन्द्रियादिनियमे नास्य देहेन्द्रियान्तरम् । तत्कर्मोपार्जितं तच्चेत्तदविद्यार्जितं जगत् ॥' श्रुतिस्मृतीतिहासपुराणेषु भगवतः सर्वज्ञस्य सर्वशक्तेः परमेश्वरस्य जगद्योनित्वमवगम्यते । न तत्पृथग्जनसाधारण्यानुमानाभासेनागमविरोधिना शक्य-

आनन्दगिरीयव्याख्या

न् । 'यः सर्वेषु लोकेषु' इत्यधिलोकम् । 'यः सर्वेषु वेदेषु' इत्यधिवेदम् । 'यः सर्वेषु यज्ञेषु' इत्यधियज्ञम् । 'यः सर्वेषु भूतेषु' इत्यधिभूतम् । 'यः प्राणेषु' इत्यादि 'य आत्मनि' इत्यन्तमध्यात्ममिति भेदः । अदेहस्य नियन्तृत्वासंभवसंभवाभ्यां संशयमाह—किमिति । अर्थान्तरे संदिह्यमाने हेतुमाह—अपूर्वेति । दृश्यत इति श्रुतिर्बहुतरलिङ्गानुरोधेनार्थविशेषपरतया नीता, अत्र त्वन्तर्यामिप्रसिद्धार्थत्वाभावात् निर्णीतो लिङ्गादिशब्दवदित्याह—किं तावदिति । अन्तर्यामिब्राह्मणस्य सविशेषे अप्रामाण्यव्यावृत्तेः संगतिः । पूर्वपक्षे विशिष्टस्य योगिनोऽन्तर्यामिणः, सिद्धान्ते परस्यैव तस्योपास्तिरिति फलम् । तत्र पूर्वपक्षाभासमाह—संज्ञाया इति । प्रसिद्ध्युपायस्य पुमर्थान्वयौ प्राप्यानिर्धारितस्य तद्योगादन्तर्यामिरूपं निर्धारणीयमिति पक्षान्तरमाह—अथवेति । अप्रसिद्धत्वात्संज्ञिनापि तथा भाव्यं व्योमादिवदाशङ्क्याह—अन्तर्यामीति । अर्थान्तरायोगे फलितमाह—तस्मादिति । तत्र शाकल्यवाक्यं दर्शयति—तथाचेति । आयतनं शरीरं, लोको लोक्यतेऽनेनेत्यसाधारणं, ज्योतिः साधारणं करणम् । सशरीरा देवता चक्षुर्मनोभ्यां सर्वं पश्यति । 'स एव नियन्ता एव वेदिता' इत्यादि यथानुमादिपदम् । ईश्वरेऽपि सर्वमिदं स्यादित्याशङ्क्याह—स चेति । उपक्रमोपसंहाराभ्यामन्तर्यामिणि सिद्धे कथं पृथिव्याद्यनेकदेवतोक्तिरित्याशङ्क्याह—योगिनो वेति । तदनुग्रहाद्योगिनो नियमनादिसामर्थ्यसंभवेऽपि, तत्राह—न त्विति । विशिष्टस्य योगिनोऽन्तर्यामिणो ध्यानार्थं अन्तर्यामिश्रुतयोर्लिङ्गसिद्धान्तः । सिद्धान्तयति—योऽन्तर्यामीति । प्रतिज्ञातेऽर्थे प्रश्नपूर्वकं हेतुमुपस्थाप्य व्याचष्टे—कुत इति । इहेत्यन्तर्यामिग्रहणम् । के ते परस्यासाधारणा धर्मा इ-

दृश्यन्ते । पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकारजातमन्तस्तिष्ठन्यमयन्
त्मनो यमयितृत्वं धर्म उपपद्यते । सर्वविकारकारणत्वे सति सर्वशक्त्युपपत्तेः । 'एष
ऽन्तर्याम्यमृतः' इति चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते । 'यं पृथिवी न वे
पृथिवीदेवताया अविज्ञेयमन्तर्यामिणं ब्रुवन्देवतात्मनोऽन्यमन्तर्यामिणं दर्शयति । 'पृ
ह्यहमस्मि पृथिवीत्यात्मानं विजानीयात्' । 'तथा अदृष्टोऽश्रुतः' इत्यादिव्यपदेशो रू
त्वात्परमात्मन उपपद्यत इति । यत्त्वकार्यकरणस्य परमात्मनो यमयितृत्वं नोपपद्य
दोषः । यान्नियच्छति तत्कार्यकरणैरेव तस्य कार्यकरणवत्त्वोपपत्तेः । तस्याप्यन्यो
वस्थादोषश्च न संभवति, भेदाभावात् । भेदे हि सत्यनवस्थादोषोपपत्तिः । तस्मा
न्तर्यामी ॥ १८ ॥

## नच स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्यादेतत् । अदृष्टत्वादयो धर्माः सांख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यन्ते, रूपा
तस्य तैरभ्युपगमात् । 'अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' (मनु० १।५) इति हि

---

रत्नप्रभाव्याख्या

त्यसिद्ध एवान्तर्यामीति सिद्धान्तयति—एवं प्राप्त इति । देवतानिरासे हेत्वन्तरमाह—यं पृथि
नियन्ता, अशरीरत्वात्, घटवदित्युक्तं निरस्यति—नैष दोष इति । नियम्यातिरिक्तशरीरशून्यत्वं वा
न्धित्वं वा । आद्ये, स्वदेहनियन्तरि जीवे व्यभिचारः । द्वितीयस्त्वसिद्धः, ईश्वरस्य स्वाविद्योपार्जितसर्व
यान्नियच्छतीति । सशरीरो नियन्तेति लोकदृष्टिमनुसृत्यैतदुक्तम् । वस्तुतस्तु चेतनसांनिध्यात्तस्य
तच्छक्तिमत्त्वं नियन्तृत्वं । तच्चाचिन्त्यमायाशक्तेश्चिदात्मनः शरीरं विनैवोपपन्नं । कार्यकरणसंघातात्मको
लिङ्गदेहस्य व्यावृत्तिः । ननु देहनियन्तुर्जीवस्यान्यो नियन्ता चेत्तस्याप्यन्य इत्यनवस्थेत्यत आह—तस्यापि
सर्वनियन्तृत्वमीश्वरस्य श्रुतं, तस्य नियन्त्रन्तरानुमाने श्रुतिबाध इति नानवस्थेत्यर्थः । यद्वा ईश्वराद्भेद
न्तृत्वोक्तेः सत्यभेदाभावान्नानवस्थेत्यर्थः ॥ १८ ॥ प्रधानं महदादिक्रमेण कथं प्रवर्तत इति तर्कस्याविषय
क्र्यमिति । रूपादिहीनत्वादविज्ञेयं, सर्वतो दिक्षु प्रसुप्तमिव तिष्ठति जडत्वादित्यर्थः । अतत् अप्रधानं

भामतीव्याख्या

मपह्नोतुम् । तथाच सर्वं विकारजातं तदविद्याशक्तिपरिणामस्तस्य शरीरेन्द्रियस्थाने वर्तत इति यथायथं पृथिव्या
णैस्तानेव पृथिव्यादिदेवतादीञ्छक्नोति नियन्तुम् । न चानवस्था । नहि नियन्त्रन्तरं तेन नियम्यते, किंतु यो
सिद्धः स परमात्मैवोपाध्यवच्छेदकल्पितभेदस्तथा व्याख्यायत इत्यसकृदावेदितं, तत्कुतो नियन्त्रन्तरं, कुत
'नान्योऽतोऽस्ति द्रष्टा' इत्याद्या अपि श्रुतय उपपन्नार्थाः । परमार्थतोऽन्तर्यामिणोऽन्यस्य जीवात्मनो द्रष्टुरना
ल्पितजीवपरमात्मभेदाश्रयास्तु ज्ञातृज्ञेयभेदश्रुतयः, प्रत्यक्षादीनि प्रमाणानि, संसारानुभवः, विधिनिषेधशास्त्र
चाधिदैवादिष्वेकस्यैवान्तर्यामिणः प्रत्यभिज्ञानं समञ्जसं भवति, 'यः सर्वाँल्लोकान्' 'यः सर्वाणि भूतानि'

आनन्दगिरीयव्याख्या

ऽन्तर्यामिणि व्यपदिश्यन्ते, तत्र सर्वनियन्तृत्वं तावदाह—पृथिव्यादीति । साधनाधीनशक्त्या तद्वतो ज्ञाने तद्वियोगे
सिद्धशक्त्येश्वरग्रहे लाघवात्तस्यैव सर्वनियन्तृतेति भावः । परस्यैवासाधारणधर्मद्वयमाह—एष इति । देवपक्षे दोष
एकस्य कर्मकर्तृत्वायोगात्पृथिव्यपि देवता न स्वात्मानं जानीयादिति कुतस्ततोऽन्यत्वं, तत्राह—पृथिवीति । अहं
नुभवसिद्धा देवतायामपि नापह्नोतुं शक्येत्यर्थः । इतोऽपि परमात्मैवान्तर्यामीत्याह—तथेति । अकार्यकरणत्वान्न
त्युक्तमनुवदति—यत्त्विति । किमीश्वरस्य नियम्यातिरिक्तदेहादिराहित्यं वा देहाद्यसंबन्धो वा तत्राभोक्तृत्वं वा
तत्राद्यः स्वदेहादिनियमने देहान्तराद्यभावेन व्यभिचारात् । द्वितीये स्वाविद्यार्जितदेहादेरीश्वरेण संबन्धादसिद्धिः ।
श्वरो न नियन्तेत्यत्राचेतनत्वमुपाधिः । नच मुक्तात्मनु साध्याव्याप्तिः । तेषामीश्वराभेदेन पक्षत्वादिति विवक्षया
रस्य नियन्तृत्वे कार्यकारणवत्त्वमपि शक्यमस्मदादिवदनुमातुमित्याशङ्क्य नियम्यकार्यकरणवत्त्वे सिद्धसाधनमतिरि
त्याह—यान्निति । स्वदेहादिनियन्तुरपि जीवस्यान्यो नियन्ता चेत्तस्याप्यन्यो नियन्ता स्यादविशेषादित्याशङ्क्याह—
मुख्यं सर्वनियन्तृत्वं श्रौतम् । नच तादृशि सर्वनियन्तरि भेदः । न चानुमानं श्रुतिबाधितमुत्तिष्ठति । तत्रानवस्थेत्य
वस्थेत्याह—भेदे हीति । तथापि नियन्तृत्वं क्वापि निष्ठति चेदिष्टसिद्धिरिति भावः । सूत्रार्थमुपसंहरति—
सूत्रव्यावर्त्यां शङ्कामाह—स्यादेतदिति । यौक्तिकेऽर्थे स्मृतिमपि संवादयति—अप्रतर्क्यमिति । इदं महदादि

त्रापि नियन्तृत्वं सर्वविकारकारणत्वादुपपद्यते । तस्मात्प्रधानमन्तर्यामिशब्दं स्यात् । 'ईक्ष-तेर्नाशब्दम्' (ब्र० १।१।५) इत्यत्र निराकृतमपि सत्प्रधानमिहादृष्टत्वादिव्यपदेशसंभवेन पुन-राशङ्क्यते । अत उत्तरमुच्यते—नच स्मार्तं प्रधानमन्तर्यामिशब्दं भवितुमर्हति । कस्मात्, अत-द्धर्माभिलापात् । यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य संभवति तथापि न द्रष्टृत्वादिव्यपदेशः संभवति, प्रधानस्याचेतनत्वेन तैरभ्युपगमात् । 'अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता' (बृह० ३।७।२३) इति हि वाक्यशेष इह भवति । आत्मत्वमपि न प्रधानस्योपपद्यते ॥ १९ ॥ यदि प्रधानमात्मत्वद्रष्टृत्वाद्यसंभवान्नान्तर्याम्यभ्युपगम्यते, शारीरस्तर्ह्यन्तर्यामी भवतु । शारीरो हि चेतनत्वाद्द्रष्टा श्रोता मन्ता विज्ञाता च भवति, आत्मा च प्रत्यक्त्वात् । अमृतश्च, धर्माधर्मफलोपभोगोपपत्तेः । अदृष्टत्वादयश्च धर्माः शारीरे प्रसिद्धाः, दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात् । 'न दृष्टेर्द्रष्टारं पश्येः' (बृ० ३।४।२) इत्यादिश्रुतिभ्यश्च । तस्य च कार्यकर-णसंघातमन्तर्यमयितुं शीलं, भोक्तृत्वात् । तस्माच्छारीरोऽन्तर्यामीत्यत उत्तरं पठति—

**शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥**

नेति पूर्वसूत्रादनुवर्तते । शारीरश्च नान्तर्यामीष्यते । कस्मात् । यद्यपि द्रष्टृत्वादयो धर्मास्तस्य भवन्ति तथापि घटाकाशवदुपाधिपरिच्छिन्नत्वान्न कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुं च शक्नोति । अपि चोभयेऽपि हि शाखिनः काण्वा माध्यंदिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते—'यो विज्ञाने तिष्ठन्' (बृ० ३।७।२२) इति

---

रत्नप्रभाव्याख्या

प्रधानादिति हेत्वर्थः ॥१९॥ उत्तरसूत्रनिरस्याशङ्कामाह—**यदि प्रधानमित्यादिना । अमृतश्चेति ।** विनाशिनो देहान्त-रानुपपत्तेरित्यर्थः । यथा देवदत्तकर्तृकगमनक्रियाया ग्रामः कर्म न देवदत्तः, तथात्मकर्तृकदर्शनादिक्रियाया अनात्मा कर्म न त्वात्मा, क्रियायाः कर्तृविषयत्वायोगादित्याह—**कर्तरीति** । क्रियायां गुणः कर्ता, प्रधानं कर्म, तत्रैकस्यां क्रियायामेकस्य गुणत्वप्रधानत्वयोर्विरोधान्न कर्तुः कर्मत्वमित्यर्थः । दृष्टेर्द्रष्टारमात्मानं तया दृश्यया दृष्ट्या न विषयीकुर्या इत्या-दि । अदृष्टत्वादिधर्माः शारीरस्येत्याह—**नेति** । अपिशब्दसूचितं हेतुमुक्त्वा कण्ठोक्तं हेतुमाह—**अपि चोभयेऽपीति ।**

भामतीव्याख्या

यते । अमृतत्वं च परमात्मनि समञ्जसं नान्यत्र । 'य आत्मनि तिष्ठन्' इत्यादौ चाभेदेऽपि भेदोपचारलेशो न भविष्यति । परमात्मान्तर्यामी न जीवादिरिति सिद्धम् । पृथिव्यादि स्तनयित्न्वन्तमधिदैवम् । 'यः सर्वेषु लोकेषु' इत्यधिलोकम् । 'यः सर्वेषु वेदेषु' इत्यधिवेदम् । 'यः सर्वेषु यज्ञेषु' इत्यधियज्ञम् । 'यः सर्वेषु भूतेषु' इत्यधिभूतम् । प्राणाद्यात्मान्तमध्यात्मम् । अप्रसिद्धत्वादित्युपक्रममात्रं पूर्वः पक्षः ॥ १९ ॥ **दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात् ।** कर्तरि आत्मनि

आनन्दगिरीयव्याख्या

कस्मान्नान्यथेति तर्कस्याविषयो गूढत्वादित्यर्थः । रूपादिराहित्याद्विशेषं चक्षुराद्यग्राह्यं, प्रनुमभिव सर्वतः सर्वासु दिक्षु जडिमव्या-प्तिः । कथं तस्याचेतनस्यान्तर्यामित्वं, तत्राह—**तस्येति** । अदृष्टत्वादीनां प्रधाने संभवे फलितमाह—**तस्मादिति** । प्रागेव प्रधानं किमिति पुनः शङ्क्यते, तत्राह—**ईक्षतेरिति** । प्रासङ्गिकशङ्कोत्तरत्वेन सूत्रमादाय व्याकरोति—**अत इति** । अदृष्टत्वा-दिना प्रधानस्यान्तर्यामित्वमुक्तमित्याशङ्क्य हेतुमाह—**कस्मादिति** । हेत्वसिद्धिं शङ्कित्वा तदर्थमाह—**यद्यपीति** । अन्तर्यामिणि द्र-ष्टृत्वव्यपदेशं दर्शयति—**अदृष्ट इति** । शेषेति ब्राह्मणोक्तिः । प्रधानपक्षे दोषान्तरमाह—**आत्मत्वमिति** ॥ १९ ॥ उत्तरसूत्रव्यावर्त्यां शङ्कामाह—**यदीति** । द्रष्टृत्वाद्यसंभवस्य तत्रापि तुल्यत्वमाशङ्क्योक्तम्—**शारीरो हीति** । तथापि कथं तस्यामृतत्वं, स हि देहापाये म्रियते, तत्राह—**अमृतश्चेति** । अन्यथाऽकृताभ्यागमादिप्रसङ्गात् । 'जीवापेतं वाव' इत्यादिश्रुतेश्चेत्यर्थः । तथापि कथमदृष्टत्वादीनां तत्रोपपत्तिस्तस्याहं-प्रत्ययगम्यत्वात्, तत्राह—**अदृष्टत्वेति** । सकर्मिका क्रिया कर्म व्याप्नोति न कर्तारं, तेन कर्तर्यात्मनि दर्शनादिवृत्तौ कर्तृत्वेन गुणत्वं कर्मत्वेन प्राधान्यं चेत्येकस्यां क्रियायां युगपद्गुणप्रधानत्वविरोधादिति हेतुमाह—**दर्शनादीति** । जीवस्यादृष्टत्वादयो न केवलं यौक्ति-काः, किंतु श्रौताश्चेत्याह—**नेति** । लौकिक्या दृष्टेर्बुद्धिपरिणतेर्द्रष्टारमात्मानं तयैव दृष्ट्या त्वं न पश्येः शक्नोषि द्रष्टुमित्यर्थः । 'न श्रुतेः श्रोतारं' इत्यादिसंग्रहार्थमादिपदम् । तथापि कथं तस्यान्तर्यामित्वं नियम्यनिविष्टत्वात्, तत्राह—**तस्येति** । अन्तर्यामिधर्माणां शारीरे संभवे फलमाह—**तस्मादिति** । सूत्रमवतारयति—**अत इति** । अपेक्षितं पूरयित्वा प्रतिज्ञां विभजते—**नेत्यादिना** । चकारादनु-वृत्तनञो द्रष्टृत्वादिधर्माणां संभवात्तदन्तर्यामित्वं दुर्वारमिति शङ्कते—**कस्मादिति** । चशब्दसूचितं सुवर्णयन्दर्शयति—**यद्यपीति** । उभये-इत्यादि व्याकरोति—**अपि चेति** । माध्यंदिनपाठे भेदोक्तिं व्यनक्ति—**य आत्मनीति** । काण्वानां पाठे भेदोक्तिं व्यनक्ति—**यो**

काण्वाः। 'य आत्मनि तिष्ठन्' इति माध्यंदिनाः। 'य आत्मनि तिष्ठन्' इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः। 'यो विज्ञाने तिष्ठन्' इत्यस्मिन्नपि पाठे विज्ञानशब्देनात्मा उच्यते। विज्ञानमयो हि शारीरः। तस्माच्छारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम्॥ कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते, यश्चायमीश्वरोऽन्तर्यामी यश्चायमितरः शारीरः। का पुनरिहानुपपत्तिः। 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतिवचनं विरुध्येत। अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं, श्रोतारं, मन्तारं, विज्ञातारं चात्मानं प्रतिषेधति। नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमितिचेत्, न, नियन्त्रन्तराप्रसङ्गादविशेषश्रवणाच्च। अत्रोच्यते—अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः। एको हि प्रत्यगात्मा भवति। न द्वौ प्रत्यगात्मानौ संभवतः। एकस्यैव तु भेदव्यवहार उपाधिकृतः, यथा घटाकाशो महाकाश इति। ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रं चेति सर्वमेतदुपपद्यते। तथाच श्रुतिः—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्याविषये सर्वं व्यवहारं दर्शयति। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति विद्याविषये सर्वं व्यवहारं वारयति॥ २०॥

## अदृश्यत्वादिगुणको धर्मोक्तेः॥ २१॥



भूतयोनिः प्रधानं वा जीवो वा यदि वेश्वरः॥ आद्यौ पक्षावुपादाननिमित्तत्वाभिधानतः॥
ईश्वरो भूतयोनिः स्यात्सर्वज्ञत्वादिकीर्तनात्॥ दिव्यात्युक्तेर्न जीवः स्यान्न प्रधानं विशेषणात्॥

रत्नप्रभाव्याख्या

भेदेनेति सूत्रात्तात्त्विकभेदभ्रान्तिं निरसितुं शङ्कते—कथमिति। नन्वत्रैको भोक्ता जीवः, ईश्वरस्तु... विरोध इति शङ्कते—का पुनरिति। तयोर्भेदः श्रुतिविरुद्ध इति पूर्ववाद्याह—नान्य इति। स एव श्रुत्यर्थः... श्रुतेरर्थान्तरमाशङ्क्य निषेधति—नियन्त्रन्तरेत्यादिना। न केवलमप्रसक्तप्रतिषेधः, किंत्वविशेषेण द्रष्ट्रन्तरस्य... म्यन्तरनिषेधार्थत्वे बाधश्चेत्याह—अविशेषेति। तस्मात्सूत्रे, 'य आत्मनि तिष्ठन्' इति श्रुतौ च द्रष्टृभेदोक्तिः... इति वाक्यशेषे भेदनिरासादिति प्राप्ते, भेद उपाधिकल्पितः श्रुतिसूत्राभ्यामनूद्यत इति समाधत्ते—अत्रोच्यत... सत्यः किं न स्यादत आह—एको हीति। गौरवेण द्वयोरहंधीगोचरत्वासंभवादेक एव तद्गोचरः। तदन्यो... त्मलाभात्मभेदः सत्य इत्यर्थः। ततश्चेति। कल्पितभेदाङ्गीकाराद्भेदापेक्षं सर्वं युज्यत इत्यर्थः। तस्मादन्तर्यामी ब्रह्मणि समन्वितमिति सिद्धम्॥ २०॥ अदृश्यत्वादिगुणको धर्मोक्तेः। मुण्डकवाक्यमुदाहरति—अथ...

भामतीव्याख्या

प्रवृत्तिविरोधादित्यर्थः॥ २०॥ अदृश्यत्वादिगुणको धर्मोक्तेः। अथ परा यया तदक्षरमधिगम्यते...

आनन्दगिरीयव्याख्या

विज्ञान इति। काण्वपाठे शारीरवाचिपदाभावात्कुतो भेदोक्तिः, तत्राह—विज्ञानेति। विज्ञानशब्दस्य बुद्ध्यर्थत्व... रित्याशङ्क्य रूढ्यभावेऽपि वृत्त्यन्तरमाह—विज्ञानेति। भेदोक्तिफलमाह—तस्मादिति। भेदेनेत्यादिसूत्रात्तात्त्विक... शङ्कते—कथमिति। द्रष्टृद्वयमेव विशिनष्टि—यश्चेति। न खल्वेकस्मिन्देहे द्रष्टृद्वयं युक्तं, विरुद्धाभिप्रायानेकचेतन... स्याव्यवस्थितत्वप्रसङ्गादित्यर्थः। कश्चित्कार्यकरणसंहतो भोक्ता तद्रहितोऽन्योऽधिष्ठाता पश्यत्येवेति विभागे नानुपपत्ति... पुनरिति। अनुपपत्तिमाह—नेति। विरोधं स्फोरयितुं प्रतीतमर्थमाह—अत्रेति। अस्मिन्ग्रामे मैत्र एवाद्वितीय... निवारकमेव तदिति शङ्कते—नियन्त्रन्तरेति। सर्वनियन्तुः स्वनियन्त्रा नियन्तव्यत्वशङ्काभावात्, नान्योऽतोऽस्ति नियन्ते... नैवमित्याह—नेति। आत्मनि तिष्ठन्नित्यौपाधिकभेदार्थं वाक्यं, 'नान्योऽतोऽस्ति' इति तु तत्त्वविषयमिति परिहरति—अत्रे... रतत्त्वविषयत्वं निषेधोक्तेश्चातत्त्वविषयत्वेनेति वैपरीत्यमाशङ्क्याह—एको हीति। प्रत्यक्त्वात्मत्वयोरेकत्रैव मुख्यत्वादि... तत्त्वं चेत्कुतो भेदोक्तिः, तत्राह—एकस्येति। औपाधिकभेदोक्तिमुदाहरति—यथेति। तात्त्विकभेदाभावे कथं मुख्यानु... ततश्चेति। प्राप्तृप्राप्तव्यादिसंग्रहार्थमादिपदम्। आविद्यभेदाव्यवहारमात्रसिद्धावन्वयव्यतिरेकश्रुतिमाह—तथाचेति। ... नियन्तृनियम्यत्वम्। वस्तुतस्त्वद्वितीयः परमात्मा, तत्राविद्यया सर्वनियन्तर्यन्ततमन्तर्यामिब्राह्मणं, तस्यानुध्यानार्थ... भावः॥ २०॥ अदृष्टत्वादीनां प्रधानगामित्वेऽपि द्रष्टृत्वादीनां तत्रायोगान्न तदन्तर्यामीत्युक्तम्। तर्हि भूतयोन्य... दीनामनुक्तरदृश्यत्वादिगुणको भूतयोनिः प्रधानमेवेत्याशङ्क्याह—अदृश्यत्वादीति। अथर्वणवाक्यमाह—अथेति।

थ परा यया तदक्षरमधिगम्यते' 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं
त्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड० १।१।५,६)
ते श्रूयते । तत्र संशयः—किमयमद्रेश्यत्वादिगुणको भूतयोनिः प्रधानं स्यादुत शारीर
होस्वित्परमेश्वर इति । तत्र प्रधानमचेतनं भूतयोनिरिति युक्तं, अचेतनानामेव तस्य दृष्टान्त-
नोपादानात् । 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा
तः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम्' (मु०१।१।७) इति । ननूर्णनाभिः
रुषश्च चेतनाविह दृष्टान्तत्वेनोपात्तौ । नेति ब्रूमः । न हि केवलस्य चेतनस्य तत्र सूत्रयोनित्वं
शलोमयोनित्वं चास्ति । चेतनाधिष्ठितं ह्यचेतनमूर्णनाभिशरीरं सूत्रस्य योनिः, पुरुषशरीरं च

रत्नप्रभाव्याख्या

पापरविद्योक्त्यनन्तरं यया निर्गुणं ज्ञायते परा सोच्यते । तामेव विषयोक्त्या निर्दिशति—**यत्तदिति** । अद्रेश्यं अदृश्यं
द्रियैः, अग्राह्यं कर्मेन्द्रियैः, गोत्रं वंशः, वर्णो ब्राह्मणत्वादिजातिः, चक्षुःश्रोत्रशून्यमचक्षुःश्रोत्रं, पाणिपादशून्यमपाणिपादं ज्ञानक-
विकलमित्यर्थः । विभुं प्रभुं, सुसूक्ष्मं दुर्ज्ञेयत्वात् । नित्याव्ययपदाभ्यां नाशापक्षययोर्निरासः । भूतानां योनिं प्रकृतिं यत्पश्यन्ति
पण्डितास्तदक्षरं तद्विद्या परेत्यन्वयः । अद्रेश्यत्वादिगुणानां ब्रह्मप्रधानसाधारणत्वात्संशयः । पूर्ववद्द्रष्टृत्वादीनां चेतनधर्माणाम-
रस्तु प्रधानमिति प्रत्युदाहरणेन पूर्वपक्षयति—**तत्रेति** । पूर्वपक्षे प्रधानाद्युपास्तिः, सिद्धान्ते निर्गुणधीरिति फलम् ।
भिर्लूताकीटः तन्तून्स्वदेहात्सृजति, उपसंहरति चेत्यर्थः । सतो जीवतः । ननु पूर्वं निरस्तं प्रधानं कथमुत्थाप्यते, त-

भामतीव्याख्या

बुद्धीन्द्रियाविषयः । अग्राह्यं कर्मेन्द्रियागोचरः । अगोत्रं कारणरहितम् । अवर्णं ब्राह्मणत्वादिहीनम् । न
मेन्द्रियाणामविषयः, इन्द्रियाण्यप्यस्य न सन्तीत्याह—**अचक्षुःश्रोत्रमिति** । बुद्धीन्द्रियाण्युपलक्षयति । अपाणि-
ति कर्मेन्द्रियाणि । नित्यं, विभुं प्रभुं, सर्वगतं, सुसूक्ष्मं दुर्विज्ञानत्वात् । स्यादेतत् । नित्यं सत्किं परिणामि नित्यं,
—**अव्ययम्** । कूटस्थनित्यमित्यर्थः । 'परिणामो विवर्तो वा सरूपस्योपलभ्यते । चिदात्मना तु सारूप्यं जडानां नोपपद्यते
जडं प्रधानमेवातो जगद्योनिः प्रतीयताम् । योनिशब्दो निमित्तं चेत्कुतो जीवनिराक्रिया ॥ २ ॥' परिणममानसरूपा
परिणामा दृष्टाः । यथोर्णनाभिलालापरिणामा लूतातन्तवस्तत्सरूपाः, तथा विवर्ता अपि विवर्तमानसरूपा एव न
: । यथा रज्जुविवर्ता धारोरगादयो रज्जुसरूपाः । न जातु रज्ज्वां कुञ्जर इति विपर्यस्यन्ति । नच हेमपिण्डपरिणामो
लूतातन्तुः । तत्कस्य हेतोः, अत्यन्तवैरूप्यात् । तस्मात्प्रधानमेव जडं जडस्य जगतो योनिरिति युज्यते । स्वविकारानक्षुत
दक्षरम् । 'यः सर्वज्ञः सर्ववित्' इति चाक्षरात्परात्परस्याख्यानं, 'अक्षरात्परतः परः' इति श्रुतेः । नहि परस्मादात्म-
विकारजातस्य च परस्तात्प्रधानादतेऽन्यदक्षरं संभवति । अतो यः प्रधानात्परः परमात्मा स सर्ववित् । भूतयोनिस्त्वक्षरं
व, तच्च सांख्याभिमतमेवास्तु । अथ तस्याप्रामाणिकत्वान्न तत्र परितुष्यति, अस्तु तर्हि नामरूपबीजशक्तिभूतमव्याकृतं भूत-
प्रधीयते हि तेन विकारजातमिति प्रधानं, तत्खलु जडमनिर्वाच्यमनिर्वाच्यस्य जडस्य प्रपञ्चस्योपादानं युज्यते,
त् । ननु चिदात्मानिर्वाच्यः, विरूपो हि सः । अचेतनानामिति भाष्यं सारूप्यप्रतिपादनपरम् । स्यादेतत् । स्मार्तप्र-

आनन्दगिरीयव्याख्या

परा विद्योच्यते तां विशिनष्टि—**ययेति** । अक्षरं वर्णसमुदायावच्छिनत्ति—**यदिति** । अद्रेश्यमदृश्यं ज्ञानेन्द्रियाविषयः,
कर्मेन्द्रियाविषयः, अगोत्रं वंशशून्यम्, अवर्णं जातिहीनम् । न केवलमिन्द्रियाविषयः, तद्धीनं चेत्याह—**अचक्षुरिति** । न विद्येते
त्रे यस्य तत्तथा । चक्षुःश्रोत्रोक्तिरनुक्तज्ञानेन्द्रियोपलक्षणार्थम् । कर्मेन्द्रियराहित्यमाह—**अपाणीति** । पाणिश्च पादश्च पाणिपादं
यस्य तत्तथा । उभयोक्तिरनुक्तकर्मेन्द्रियोपलक्षणम् । नित्यमनाशोपलक्षितसत्ताकम् । विभुं प्रभुम्, सर्वगतं सर्वकल्पनाधिष्ठानम् ।
दुर्ज्ञानत्वात्, तदव्ययमपक्षयाभावात्, यथोक्तमक्षरं भूतयोनिं भूतकारणं धीराः पण्डिताः पश्यन्ति । तदक्षरं ययाधिगम्यते सा परा
: । अदृश्यत्वादिसाधारणधर्मदृष्ट्या संशयमाह—**तत्रेति** । भूतयोनिः समन्वयर्थः । साधारणस्याप्यन्तर्यामिशब्दस्य लाघवसा-
त्यसिद्धनियन्तृत्वादिनेश्वरपरत्वमुक्तम् । इहापि साधारणाद्दृश्यत्वादिधर्मस्याचेतनदृष्टान्तोपादानबलात्प्रधाननिष्ठतेति पूर्वपक्षमाह—
। भूतयोनिवाक्यस्य निर्विशेषे ब्रह्मण्यन्वयोक्तेः संगतयः । पूर्वपक्षे प्रधानस्य शारीरस्य वा ध्यानं, सिद्धान्ते निर्विशेषवस्तु-
फलम् । दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतानियमाद्दृष्टान्तस्याचेतनत्वाद्दार्ष्टान्तिकस्यापि भूतयोनेरचेतनत्वमिति हेतुमाह—**अचेतनाना-**
ऊर्णनाभिर्लूताकीटः स्वदेहाव्यतिरेकिणस्तन्तून्सृजत्युपसंहरति चेत्यर्थः । सतो विद्यमानात् । जीवत इति यावत् । इति
योक्तिः । दृष्टान्तमाक्षिप्य समाधत्ते—**नन्विति** । इहेत्यक्षरादिश्रोत्पत्तावित्यर्थः । केवलचेतनस्य वा कारणत्वं, चेतनाविशिष्टाचे-
वा । तत्राद्यं प्रत्याह—**न हीति** । शरीरस्यापि तत्रान्वयव्यतिरेकित्वादित्यर्थः । द्वितीयमङ्गीकरोति—**चेतनेति** । दार्ष्टान्तिकेऽपि
ष्ठितं प्रधानं जगद्धेतुरिति भावः । पूर्वं प्रधानस्य प्रत्युक्तत्वात्कथं पुनरुक्तशङ्का, तत्राह—**अपिचेति** । इहेत्यत्रोक्तं च

केशलोम्नामिति प्रसिद्धम् । अपिच पूर्वत्राद्दृष्टत्वाद्यभिलापसंभवेऽपि द्रष्टृत्वाद्यभि... प्रधानमभ्युपगतम् । इह त्वदृश्यत्वादयो धर्माः प्रधाने संभवन्ति । नचात्र विरु... कश्चिदभिलप्यते । ननु 'यः सर्वज्ञः सर्ववित्' ( मुण्ड० १।१।९ ) इत्ययं वाक्यशे... धाने न संभवति, कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति । अत्रोच्यते—'यया त... ग्यते' 'यत्तदद्रेश्यम्' इत्यक्षरशब्देनादृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनरन्ते ... ति—'अक्षरात्परतः परः' ( मु० २।१।२ ) इति । तत्र यः परोऽक्षराच्छ्रुतः ... सर्ववित्संभविष्यति । प्रधानमेव त्वक्षरशब्दनिर्दिष्टं भूतयोनिः । यदा तु योनिशब्दो... वाची तदा शारीरोऽपि भूतयोनिः स्यात्, धर्माधर्माभ्यां भूतजातस्योपार्जनादिति ... ऽभिधीयते—योऽयमदृश्यत्वादिगुणको भूतयोनिः स परमेश्वर एव स्यान्नान्य इति ... वगम्यते । धर्मोक्तेः । परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते—'यः सर्वज्ञः सर्ववि... हि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्ववित्त्वं वा संभ... क्षरशब्दनिर्दिष्टाद्भूतयोनेः परस्यैव तत्सर्वज्ञत्वं सर्ववित्त्वं च न भूतयोनिविषयमित्यु...

रत्नप्रभाव्याख्या

त्राह—अपिचेति । अत्र प्रधाने विरुध्यमानोऽसंभावितो वाक्यशेषः श्रुत इति शङ्कते—ननु य इति । ... भूतप्रकृतेः प्रत्यभिज्ञानात्प्रथमान्तपरशब्दोक्तस्य जगन्निमित्तेश्वरस्य सर्वज्ञत्वादिकमित्याह—अत्रोच्यत इति । ... शेषात्' इति न्यायेन सिद्धान्तयति—एवं प्राप्त इति । चेतनाचेतनत्वेन संदिग्धे भूतयोनौ 'यः सर्वज्ञः' इति... निर्णय इत्ययुक्तं, वाक्यशेषे भूतयोनेः प्रत्यभिज्ञापकाभावादिति शङ्कते—नन्विति । 'जनिकर्तुः प्रकृतिः' इति ... नसंज्ञायां पञ्चमीस्मरणादक्षरात्संभवतीति प्रकृतित्वेनोक्ताक्षरस्य भूतयोनेर्वाक्यशेषे तस्मादिति प्रकृतिलिङ्गेन ... समाधत्ते—अत्रोच्यत इति । एतत्कार्यं ब्रह्म सूक्ष्मात्मकं नाम रूपं, स्थूलं ततोऽन्नं व्रीह्यादीत्यर्थः । ...

भामतीव्याख्या

धाननिराकरणेनैवैतदपि निराकृतप्रायं, तत्कुतोऽस्य शङ्केत्यत आह—अपिच पूर्वत्राद्दृष्टत्वादीति । ... यणं, इह तु बाधकं नास्तीत्यर्थः । तेन 'तदैक्षत' इत्यादावुपचर्यतां ब्रह्मणो जगद्योनिताऽविद्याशक्त्याश्रयत्वेन । ... जगद्योनित्वसंभवे न द्वारद्वारिभावो युक्त इति प्रधानमेवात्र वाक्ये जगद्योनिरुच्यत इति पूर्वः पक्षः । अथ ... कारणपरस्तथापि ब्रह्मैव निमित्तं न तु जीवात्मेति विनिगमनायां न हेतुरस्तीति संशयेन पूर्वः पक्षः । ... जगद्योनिभावमुक्त्वा ह्यनन्तरम् । यः सर्वज्ञ इति श्रुत्या सर्वज्ञस्य स उच्यते ॥ १ ॥ तेन निर्देशसामान्यात्... अक्षरं सर्वविद्विश्वयोनिर्नाचेतनं भवेत् ॥ २ ॥ अक्षरात्परत इति श्रुतिस्त्वव्याकृते मता । अश्रुते यत्न... क्षरम् ॥ ३ ॥' नेह तिरोहितमिवास्ति किंचित् । यत्तु सारूप्याभावान्न चिदात्मनः परिणामः प्रपञ्च इति ... प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः । अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ १ ॥' न खलु बाह्यसारूप्यनिबन्धन ... इति नियमनिमित्तमस्ति । आन्तरादपि कामक्रोधभयोन्मादस्वप्नादेर्मानसादपराधात्सारूप्यानपेक्षात्तस्य तस ...

आनन्दगिरीयव्याख्या

भूतयोनिवाक्योक्तिः । विरुध्यमानत्वमप्रधानविषयत्वम् । यद्यत्रेति प्रधानमुक्तम् । विरुध्यमानत्वं धर्मस्य तस्मिन्नन... प्रधाने विरुद्धधर्माभावेऽपि वाक्यशेषे सोऽस्तीति शङ्कते—नन्विति । भूतयोनेरक्षरस्य पञ्चम्यन्ताक्षरश्रुत्या ... शब्दोक्तस्य सर्वज्ञत्वादीति वाक्यशेषस्याक्षरातिरिक्तं विषयं दर्शयन्नाह—अत्रेति । अक्षरस्य जगद्योनित्वमुक्त्वा 'यः ... इति सर्वज्ञस्य तदुक्तेर्लिङ्गप्रत्यभिज्ञानादक्षरस्यैव सर्वज्ञत्वादीतिचेन्, न, अक्षरश्रुतिप्रत्यभिज्ञातो लिङ्गप्रत्यभिज्ञा ... पुरुषं वेद' इति चेतनेऽपि भूतयोनौ श्रुत्या प्रत्यभिज्ञानात्, जगत्प्रकृतित्वलिङ्गानुगृहीतश्रुतिप्रत्यभिज्ञया केवल... न, तस्मादिति निमित्तेऽपि पञ्चमीसंभवात् । नचैवमपि प्रत्यभिज्ञायाः साम्यं, अचेतनद्दृष्टान्तानुगृहीतप्रत्यभिज्ञा... भूतयोनिरित्याह—प्रधानमेवेति । सर्वज्ञादिवैकल्यात्र प्रधानं ग्राह्यमित्युक्त्वा जीवो देहाद्यतिरिक्तोऽन्युदयनिःश्रेय... पक्षान्तरमाह—यदेति । योनिशब्दस्य प्रकृत्यर्थत्वे निमित्तार्थत्वे च प्रधानस्य सर्वज्ञादिविकलस्य जीवस्य वा देह... धर्मार्थे ध्यानार्थमतदित्युपसंहर्तुमितिशब्दः । सिद्धान्तसूत्रमवतारयति—एवमिति । तत्र प्रतिज्ञां व्याचष्टे—योऽ... संभवति नियमासिद्धिरित्याह—कथमिति । नियामकं हेतुमवतार्य व्याचष्टे—धर्मेति । भूतयोनिरिहेत्युक्तः ... —नहीति । 'अक्ताः शर्करा उपदधाति' इत्यत्र 'तेजो वै घृतम्' इति शेषान्निर्णयवदिहापि साधारणोपक्रमस्य... निर्णेयेत्यर्थः । वाक्यशेषो भूतयोनिविषयो नेत्युक्तं स्मारयति—नन्विति । 'जनिकर्तुः प्रकृतिः' इति स्मृतेरक्षरात्... कृतित्वेनोक्तमक्षरं 'तस्मादेतद्ब्रह्म' इत्यत्रापि पञ्चम्या प्रत्यभिज्ञायते । तेन भूतयोन्यर्थ एव वाक्यशेष इत्याह—अत्रेति ।

यते—नैवं संभवति । यत्कारणं 'अक्षरात्संभवतीह विश्वम्' इति प्रकृतं भूतयोनिमिह जायमानप्रकृतित्वेन निर्दिश्यानन्तरमपि जायमानप्रकृतित्वेनैव सर्वज्ञं निर्दिशति—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति । तस्मान्निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात्प्रकृतस्यैवाक्षरस्य भूतयोनेः सर्वज्ञत्वं सर्ववित्त्वं च धर्म उच्यत इति गम्यते । 'अक्षरात्परतः परः' इत्यत्रापि न प्रकृताद्भूतयोनेरक्षरात्परं कश्चिदभिधीयते । कथमेतदवगम्यते । 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' ( मु० १।२।१३ ) इति प्रकृतस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात् । कथं तर्हि 'अक्षरात्परतः परः' इति व्यपदिश्यत इति, उत्तरसूत्रे तद्वक्ष्यामः । अपि चात्र द्वे विद्ये वेदितव्ये उक्ते—'परा चैवापरा च' इति । तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वा ब्रवीति—'अथ परा यया तदक्षरमधिगम्यते' इत्यादि । तत्र परस्या विद्याया विषयत्वेनाक्षरं श्रुतम् । यदि पुनः परमेश्वरादन्यददृश्यत्वादिगुणकमक्षरं परिकल्प्येत नेयं परा विद्या स्यात् । परापरविभागो ह्ययं विद्ययोरभ्युदयनिःश्रेयसफलतया परिकल्प्यते । नच प्रधानविद्या निःश्रेयसफला केनचिदभ्युपगम्यते । तिस्रश्च विद्याः प्रतिज्ञायेरन्, त्वत्पक्षेऽक्षराद्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वात् । द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'

रत्नप्रभाव्याख्या

नेः प्रत्यभिज्ञानादचेतनत्वमिति, तत्राह—**अक्षरात्परत इति** । नायमक्षरशब्दो भूतयोनिं परामृशति, परविद्यागम्यत्वेनोक्तस्याक्षरस्य भूतयोनेः 'अक्षरं पुरुषं वेद' इत्यक्षरश्रुत्या चेतनलिङ्गवत्या पूर्वमेव ब्रह्मत्वेन परामर्शादित्याह—**कथमिति** । येन ज्ञानेनाक्षरं भूतयोनिं सर्वज्ञं पुरुषं वेद तां ब्रह्मविद्यां योग्यशिष्याय प्रब्रूयादित्युपक्रम्य 'अप्राणो ह्यमनाः शुभ्रः' 'अक्षरात्परतः परः' इत्युच्यमानः परो भूतयोनिरिति गम्यत इत्यर्थः । तर्हि पञ्चम्यन्ताक्षरशब्दार्थः क इत्याशङ्क्याज्ञानमिति इत्याह—**कथमिति** । परविद्येति समाख्ययापि तद्विषयस्य ब्रह्मत्वमित्याह—**अपिचेति** । ननु प्रधानविद्यापि कारणज्ञानात्परेत्यत आह—**परापरविभागो हीति** । अनित्यफलत्वेनापरविद्यां निन्दित्वा मुक्त्यर्थिने ब्रह्मविद्यां प्रोवाचेति शेषोक्तेरित्यर्थः । अस्तु प्रधानविद्यापि मुक्तिफलत्वेन परेत्यत आह—**नचेति** । ननु 'यः सर्वज्ञः' इत्यग्रे परविद्याविषयः, अदृश्यवाक्येन तु प्रधानविद्योच्यत इत्यत आह—**तिस्रश्चेति** । इतश्च भूतयोनेर्ब्रह्मत्वमित्याह—**कस्मिन्निति** । नमात्रस्यैकायतनमुपादानं तज्ज्ञानात्कार्यज्ञानेऽपि तदकार्याणामात्मनां ज्ञानं न भवति । एवं जीवे ज्ञाते तदकार्यस्य भोग्यस्य

भामतीव्याख्या

हेतुमति विभ्रमे तदभावादनुयोगो युज्यते । अनाद्यविद्यातद्वासनाप्रवाहपतितस्तु नानुयोगमर्हति । तस्मात् परमात्मविवर्तप्रपञ्चस्तद्योनिः, भुजङ्ग इव रज्जुविवर्ततया तद्योनिः, न तु तत्परिणामतया । तस्मात्तद्धर्मसर्वनित्योक्तेर्लिङ्गात् 'यत्तदद्रेश्यम्' अद्रेश्योपदिश्यते ज्ञेयत्वेन, नतु प्रधानं जीवात्मा वोपास्यत्वेनेति सिद्धम् । न केवलं लिङ्गादपि तु 'परा विद्या' इति समाख्यानादपि प्रतिपत्तव्यमित्याह—**अपिच द्वे विद्ये इति** । लिङ्गान्तरमाह—**कस्मिन्नु भगव इति** । भोगा भोग्यास्तेभ्यो भोक्तरि । अनच्छिन्नो हि जीवात्मा भोग्येभ्यो विषयेभ्यो व्यतिरिक्त इति तज्ज्ञानेन न सर्वं ज्ञातं भवति । समा-

आनन्दगिरीयव्याख्या

विशेषेण सर्वविदो ज्ञानमयतपःसहितात्कार्यं ब्रह्म सूक्ष्मभूतात्मकं नाम रूपं च स्थूलभूतात्मकमन्नं च व्रीहियवादि सर्वं भौतिकं तद्द्वारा प्राप्नोतीत्याह—**तस्मादिति** । लिङ्गप्रत्यभिज्ञाफलमाह—**तस्मादिति** । श्रुतिप्रत्यभिज्ञा लिङ्गप्रत्यभिज्ञातो बलवती दर्शितेत्याशङ्क्य साक्षरपदं न प्रकृताक्षरगामीत्याह—**अक्षरादिति** । तत्र गमकं पृच्छति—**कथमिति** । चेतने भूतयोनौ प्रथममेव श्रुतिप्रत्यभिज्ञेत्याह—**येनेति** । येन ज्ञानेनाक्षरं प्रकृतं भूतयोनिं सर्वज्ञं पुरुषं सत्यं वेद तां ब्रह्मविद्यामुपसन्नाय शान्तायाचार्यः प्रोवाच इत्युपक्रम्य 'अक्षरात्परतः परः' इत्युच्यमानः परो न भूतयोनेरतिरिच्यते । तथाच कश्चिज्जगत्प्रकृतित्वं कश्चित्सर्वज्ञत्वमिति न इति भावः । पञ्चम्यन्ताक्षरपदस्य भूतयोन्यर्थत्वाभावे तद्वाच्यं वाच्यमिति शङ्के—**कथमिति** । तत्र भाविनं परिहारं सूचयतीति । परा विद्येति समाख्यानादपि भूतयोनेरक्षरस्य ब्रह्मतेत्याह—**अपिचेति** । भूतयोनेरपरविद्यागम्यत्वं निराह—उदाहृते वाक्ये प्रतीतमर्थमाह—**तत्रेति** । तथापि प्रधानं जीवो वा परविद्यागम्यमक्षरं स्यादित्याशङ्क्याह—**यदीति** । विषयतया भोक्तृभोग्यविषयतया वा परापरविभागमाशङ्क्याह—**परेति** । प्रधानादिविद्या मुक्तिफलतया परा स्यादित्याशङ्क्याह—**नचेति** । प्रधानस्य तत्त्वज्ञानस्य वा धीनं मुक्तिहेतुः, चिन्मात्रविषयत्वाभावादित्यर्थः । यदि प्रधानस्य जीवस्य वा भूतयोनित्वेन परविद्या तदोत्तरत्रोच्यमानसर्वविज्ञानस्यापीष्टत्वाद्वे विद्ये इति द्वित्वश्रवणं न स्यादित्याह—**तिस्रश्चेति** । इष्टापत्तिं प्रत्याह इति । वेदेत्युपक्रमोक्तिः । इतश्च भूतयोनित्वमक्षरं ब्रह्मनिष्ठमित्याह—**कस्मिन्निति** । एकविज्ञानेन सर्वं विज्ञानं पक्षान्तरेऽपि

( मु० १।१।३ ) इति चैकविज्ञानेन सर्वविज्ञानापेक्षणं सर्वात्मके ब्रह्मणि विवक्ष्य-
लप्यते, नाचेतनमात्रैकायतने प्रधाने, भोग्यव्यतिरिक्ते वा भोक्तरि । अपिच 'स ब्रह्म-
विद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' ( मु० १।१।१ ) इति ब्रह्मविद्यां प्राधान्ये-
परापरविभागेन परां विद्यामक्षराधिगमनीं दर्शयंस्तस्या ब्रह्मविद्यात्वं दर्शयति । सा
द्यासमाख्या तदधिगम्यस्याक्षरस्याब्रह्मत्वे बाधिता स्यात् । अपरर्ग्वेदादिलक्षणा कर्म-
विद्योपक्रम उपन्यस्यते ब्रह्मविद्याप्रशंसायै । 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्त-
कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति' ( मु० १।२।७ )
दिनिन्दावचनात् । निन्दित्वा चापरां विद्यां ततो विरक्तस्य परविद्याधिकारं दर्शयति
लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभि-
त्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' ( मु० १।२।१२ ) इति । यत्तूक्तमचेतनानां पृथिव्यादीनां दा-
पादानाद्दार्ष्टान्तिकेनाप्यचेतनेन भूतयोनिना भवितव्यमिति । तदयुक्तम् । न हि दा-
न्तिकयोरत्यन्तसाम्येन भवितव्यमिति नियमोऽस्ति । अपिच स्थूलाः पृथिव्यादयो
नोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते । तस्माददृश्यत्वादिगुण-
योनिः परमेश्वर एव ॥ २१ ॥

---

रत्नप्रभाव्याख्या

ज्ञानं न भवतीत्यर्थः । ब्रह्मविद्याशब्दाच्च भूतयोनिर्ब्रह्मेत्याह—**अपिचेति** । स ब्रह्मविद्यां सर्वविद्यानां प्रतिष्ठां
विद्यामुवाच । ब्रह्मणि सर्वविद्यानां विद्याफलानां चान्तर्भावाद्ब्रह्मविद्या सर्वविद्याप्रतिष्ठा । नन्वपरविद्या परप्रशं-
आह—**अपरेति** । प्लवन्ते गच्छन्तीति प्लवा विनाशिनः, अदृढा नित्यफलसंपादनाशक्ताः, षोडशर्त्विजः पत्नी
दश । यज्ञेन नामनिमित्तेन निरूप्यन्त इति यज्ञरूपाः । तथाहि क्रतुषु याजयन्ति यज्ञं कारयन्तीत्यृत्विजः,
मानः, 'पत्युर्नो यज्ञसंयोगे' इति सूत्रेण पतिशब्दस्य नकारोऽन्तादेशो यज्ञसंबन्धे विहित इति पत्नी, एवमृत्विगादि
यज्ञ इति यज्ञरूपाः । येष्ववरमनित्यफलकं कर्म श्रुत्युक्तं, एतदेव कर्म श्रेयो नान्यदात्मज्ञानमिति ये मूढास्तुष्य-
न्ममरणमाप्नुवन्तीत्यर्थः । तद्विज्ञानार्थं ब्रह्मज्ञानार्थं गुरुमभिगच्छेदेवेति नियमः । ब्रह्मनिष्ठस्याप्यनधीतवेदस्य

भामतीव्याख्या

रूप्यान्तरमाह—**अपिच स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामिति । प्लवा ह्येते अदृढा यज्ञरूपा**
प्लवन्ते गच्छन्ति अस्थायिन इति प्लवाः । अत एवादृढाः । के ते यज्ञरूपाः । रूप्यन्तेऽनेनेति रूपं, यज्ञो
यज्ञरूपाः । ते तु षोडशर्त्विजः । क्रतुयजनेनोपाधिना ऋत्विक्शब्दः प्रवृत्त इति यज्ञोपाधय ऋत्विजः । एवं
पाधिरेव । एवं पत्नी, 'पत्युर्नो यज्ञसंयोगे' इति स्मरणात् । त एतेऽष्टादश यज्ञरूपाः, येष्वृत्विगादिषूक्तं कर्म

आनन्दगिरीयव्याख्या

स्यादित्याशङ्क्याह—**नेति** । अचेतनस्य भोग्यमात्रस्यैकमयनमाश्रयस्तस्मिन्नित्यर्थः । मात्रशब्देनात्मभ्यो भेदमाह ।
वर्गज्ञानेऽपि न भोक्तृज्ञानमित्यर्थः । जीवपक्षे तज्ज्ञाने भोग्यधीरपि नेत्याह—**भोग्येति** । ब्रह्मविद्येति समाख्या-
त्याह—**अपिचेति** । सर्वविद्यानां प्रतिष्ठा समाप्तिर्यस्यां ततो निरतिशयपुरुषार्थलाभात्तां ब्रह्मविद्यां सर्वविद्याश्रय-
वा सर्वविद्याप्रतिष्ठामथर्वनाम्ने कुत्रचित्सृष्टवाद्याय पुत्राय स ब्रह्मोक्तवानित्यर्थः । 'ब्रह्मा देवानाम्' इति वक्ता तत्रोपक्रम-
**प्राधान्येति** । तथापि कथमक्षरस्य ब्रह्मत्वं, तदाह—**सा चेति** । ब्रह्मविद्योपक्रमेऽप्यपरविद्यावदक्षरविद्यापि
शङ्क्य प्रक्रान्ताया अन्यत्रानुक्तिवदत्राप्यनुक्तौ बाधादक्षरविद्या ब्रह्मविद्यैवेत्याह—**अपरेति** । तस्यास्तत्प्रशंसार्थ
**प्लवा हीति** । प्लवन्ते गच्छन्तीति प्लवा विनाशिनः, तत्प्रसिद्धौ हिशब्दः । तदेवोत्पत्त्यादिमत्त्वेन साधयति—अदृढा
रूपाः यज्ञो रूपमुपाधिर्येषां ते तथा, ऋत्विगादिशब्दस्य यज्ञोपाधिकत्वात् । अष्टादश षोडशर्त्विजः पत्नी यजमानश्च
कर्म येषु यदाश्रयमुक्तं श्रुत्या विहितमेतदेव कर्म श्रेयोहेतुर्न ब्रह्मधीरिति ये मूढा हृष्यन्ति ते पुनःपुनर्जरापूर्वं
आदिपदं 'अविद्यायामन्तरे वर्तमानाः' इत्यादिसंग्रहार्थम् । इतश्च परविद्याशेषत्वेनैवापरविद्योक्तिरित्याह—**निन्दित्वे-**
कर्मसाध्यांल्लोकाननित्यतया ज्ञात्वा निर्वेदं वैराग्यमायाद्गच्छेत्कुर्यात् । कथं, नास्त्यकृतो मोक्षः कृतेन कर्मणा, नित्यः
कर्मणेति विरक्तस्तस्य ब्रह्मणो विज्ञानार्थं गुरुमेवाभिगच्छेद्गुरुपादोपसर्पणं कृत्वा मुक्तिहेतुज्ञानाय श्रवणादि कुर्यादि-
नोपेयाद्राजानं दैवतं गुरुम्' इति न्यायेन समित्पाणिरित्युक्तम् । श्रोत्रियमित्यादिनाध्ययनहीनस्य बाऽकर्मिणो वा
कर्मनिन्दया ततो विरक्तस्याधिकारोक्तेरक्षरविद्या ब्रह्मविद्यैवेति समुदायार्थः । पूर्वपक्षबीजमनुभाषते—**यत्त्विति** । दृष्टा-
वा । नाद्य इत्याह—**तदयुक्तमिति** । सर्वथा साम्ये परस्याप्यनिष्टापत्तिमाह—**अपिचेति** । कार्यस्य कारणा-

रोधेन श्रुतिः परित्यक्ता स्यात् । प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न संगच्छते 'एष तु वा अतिवदति' इति । 'सत्यं त्वेव विजिज्ञासितव्यम्' (छा० ७।१६) इति च प्रयत्नान्तरकरणमर्थान्तरविवक्षां सूचयति । तस्मायथैकवेदप्रशंसायां प्रकृतायामेष तु महाब्राह्मणो यश्चतुरो वेदानधीत इत्येकवेदिभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते तादृगेतद्द्रष्टव्यम् । नच प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति । प्रकृतसंबन्धासंभवकारितत्वादर्थान्तरविवक्षायाः । तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णींभूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति । यत्प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव तत् 'एष तु वा अतिवदति यः सत्येनातिवदति' इति । तत्र सत्यमिति परं ब्रह्मोच्यते, परमार्थरूपत्वात् । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१) इति च श्रुत्यन्तरात् । तथा व्युत्पादिताय नारदाय 'सोऽहं भगवः सत्येनातिवदानि' इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपदिशति । तत्र यत्प्राणादधि सत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमेत्युच्यत इति गम्यते । तस्मादस्ति प्राणादधि भूम्न उपदेश इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति । एवं चेहात्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति । प्राण एवेहात्मा विवक्षित इत्येतदपि नोपपद्यते । न हि प्राणस्य मुख्यया वृत्त्यात्मत्वमस्ति । नचान्यत्र परमात्मज्ञानाच्छोकविनिवृत्तिरस्ति, 'नान्यः पन्था विद्यतेऽयनाय' (श्वे० ६।१५) इति श्रुत्यन्तरात् । 'तं मा भगवाञ्छोकस्य पारं तारयतु' (छा० ७।१।३) इति चोपक्रम्योपसंह-

रत्नप्रभाव्याख्या

—प्रकृतेति । विजिज्ञास्यत्वलिङ्गाच्च पूर्वोक्ताद्भिन्नमित्याह—सत्यं त्वेवेति । प्रकरणविच्छेदे दृष्टान्तमाह—तस्मादिति । श्रुतिलिङ्गबलादेतत्सत्यं प्रकृतात्प्राणात्प्राधान्येन भिन्नं द्रष्टव्यमित्यर्थः । एवमतिवादित्वस्य ब्रह्मसंबन्धोक्त्या प्राणलिङ्गं निरस्तम् । यत्तु प्रश्नं विनोक्तत्वलिङ्गाद्भूमा प्राण इति, तन्न, तस्याप्रयोजकत्वादित्याह—न चेति । प्रश्नभेदादर्थभेद इति नियमः, एकस्यात्मनो मैत्रेय्या बहुशः पृष्टत्वात् । प्रश्नं विनोक्तचातुर्वेदस्य प्रकृतैकवेदाद्भिन्नत्वदर्शनाच्चेत्यर्थः । तत्र चतुर्वेदत्वस्य प्रकृतासंबन्धादर्थभेदः, एवमिहापीति स्फुटयति—तत्रेत्यादिना । सत्यपदेन प्राणोक्तिरित्यत आह—सत्यमिति । विज्ञानं निदिध्यासनम् । आदिपदान्मननश्रद्धाश्रवणमनःशुद्धिनिष्ठातद्धेतुकर्माणि गृह्यन्ते । इमान्यपि सूत्रोक्तानि ज्ञेयस्य सत्यस्य ब्रह्मत्वे लिङ्गानि । एवं श्रुतिलिङ्गैः प्राणस्यावान्तरप्रकरणं बाधित्वा प्रस्तुतं सत्यं ब्रह्म भूमपदोक्तमित्याह—तत्र यदिति । किंच 'संनिहितादपि व्यवहितं साकाङ्क्षं बलीयः' इति न्यायेन संनिहितं निराकाङ्क्षं प्राणं त्यक्त्वा उपक्रमस्थ आत्मा स्वप्रतिपादनाय भूमवाक्यापेक्ष इह भूमा ग्राह्य इत्याह—एवं चेति । किंच शोकस्य पारमित्युपक्रम्य तमसः पारमित्युपसंहारात्, शोकस्य मूलोच्छेदं विना तरणायोगाच्च, शोकपदेन मूलतमो गृह्यते । तन्निवर्तकज्ञानगम्यस्तल्लिङ्गाद्भूमा ब्रह्मेत्याह—न चान्यत्रेति । ब्राह्मणमात्मायत्तत्वं प्राणस्य वदतीति संबन्धः । नन्विदं चरमं ब्राह्मणं ब्रह्मपरमस्तु,

भामतीव्याख्या

प्राणोपासने तावन्मात्रेणैव प्रकरणसमाप्तेर्न प्राणस्यान्यायत्ततोच्येत । तदभिधाने हि सापेक्षत्वेन न प्रकरणं समाप्येत । तस्मान्नेदं

आनन्दगिरीयव्याख्या

तत्रेत्याशङ्क्याह—तत्रेति । न परं प्रकरणानुरोधेन तृतीयाश्रुतिर्विरुध्येत किंतु तुशब्दश्चेत्याह—प्रकृतेति । नच लिङ्गोपेतप्रकरणं श्रुतिवद्बलीयः, लिङ्गस्यातद्विषयोक्तेरिति भावः । यत्तु सत्यशब्दस्य गुणविधिपरत्वं, तन्न, वाक्यान्तरविरोधादित्याह—सत्यं त्विति । प्रकृतस्य गुणविशेषविधिः सूच्यते किंवा प्रकृतव्यावृत्तिरिति संदेहापोहार्थमाह—तस्मादिति । अवान्तराधिकारविच्छेदादिति हेत्वर्थः । अर्थान्तरं सत्यं प्रशंसितुं सत्यज्ञानेनातिवादित्वमुक्तमित्याह—तादृगिति । यत्तूक्तं प्राणादधि भूयःप्रश्नप्रत्युक्तो नेति, तत्राह—नचेति । किं तर्हि कारणमर्थान्तरविवक्षायामित्याशङ्क्याह—प्रकृतेति । असति प्रकृतिसंबन्धायोगे सतोरपि प्रश्नप्रतिवचनयोर्वैयर्थ्यस्य दृष्टत्वात्, तदभावेऽपि प्रकृतसंबन्धायोगे तद्भेदस्य दर्शनात्, प्रश्नादिरस्यमर्थान्तरत्वानिमित्तमिति भावः । 'नापृष्टः कस्यचिद्ब्रूयात्' इति स्मृतेरप्रश्ने प्रत्युक्तिरयुक्तेत्याशङ्क्याप्रष्टेनापि बोधनीयः शिष्यो जिज्ञासुरिति मत्वाह—तत्रेति । सत्यामर्थान्तरविवक्षायामिति यावत् । व्युत्पादयति—यदिति । सत्यशब्दार्थो भूमापि परस्मादर्थान्तरमित्याशङ्क्याह—तत्रेति । वाक्यं सप्तम्यर्थः । परस्मिन्ब्रह्मणि सत्यशब्दः प्रयुक्तपूर्वत्वाच्च तद्विषयतेत्याह—सत्यमिति । तथापि विज्ञानमननश्रद्धानिष्ठाकृतीनामन्यतमो भूमा, न सत्यं ब्रह्मेत्याशङ्क्याह व्युत्पादितेति । तेषां साधनत्वादेव फलभूतभूमतासिद्धिरित्यर्थः । तथापि कथं सत्यस्यैव तथात्वमत आह—तत्रेति । हेतूक्तिद्वारा भूमा प्रस्तुतं सत्यमित्यर्थः । इहेति वाक्योक्तिः । इत्थंसिद्धिमुक्त्वा फलितमाह—तस्मादिति । परात्मा भूमेत्यत्र महाप्रकरणमनुगृहीतमिति प्रमाणान्तरमाह—एवं चेति । यत्तु प्राणविषयत्वमात्मशब्दस्योक्तं तदनूद्य दूषयति—प्राण इति । शोकनिवृत्त्यान्वयमिदं तदुक्तम् । तर्हि लिङ्गद्वयेऽपि परात्मैवात्मशब्दार्थो न प्राण इत्याह—नचेति । नात्र मुख्यं शोकतरणं किंत्वौपचारिकमित्याशङ्क्योपक्रमोपसंहार-

रति—'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' ( छा० ७।२६।२ ) तम इति शोकादिकारणमविद्योच्यते । प्राणान्ते चानुशासने न प्राणस्यान्यायत्ततोच्यते 'आत्मतः प्राणः' ( छा० ७।२६।१ ) इति च ब्राह्मणम् । प्रकरणान्ते परमात्मविवक्षा भूमा तु प्राण एवेति चेत्, न । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' ( छा० ) इत्यादिना भूम्न एवाप्रकरणसमाप्तेरनुकर्षणात् । वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात्परमात्मनः सुतरामुपपद्यते ॥ ८ ॥

## धर्मोपपत्तेश्च ॥ ९ ॥

अपि च ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति दर्शनादिव्यवहाराभावं भूमन्यवगमयति । परमात्मनि चायं दर्शनादिव्यवहाराभावोऽवगतः । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ० ) इत्यादिश्रुत्यन्तरात् । योऽप्यसौ सुषुप्तावस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासङ्गत्वविवक्षयोक्तो न प्राणस्वभावविवक्षया, परमात्मप्रकरणात् । यदपि तस्यामवस्थायां सुखमुक्तं, तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम् । यत आह—'एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' ( बृ० ४।३।३२ ) इति । इहापि 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्' इति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति । 'यो वै भूमा तदमृतम्' इत्यमृतत्वमपीह श्रूयमाणं परमकारणं गमयति । विकाराणाममृतत्वस्यापेक्षिकत्वात्, 'अतोऽन्यदार्तम्' ( बृ० ३।४।२ ) इति च श्रुत्यन्तरात् । तथा ...

रत्नप्रभाव्याख्या

ततः प्रागुक्तो भूमा प्राण इति शङ्कते—प्रकरणान्त इति । तच्छब्देन भूमानुकर्षान्मैवमित्याह—नेति । ब्रह्मत्वे लिङ्गान्तरमाह—धर्मेति सूत्रम् । यदुक्तं भूम्नो लक्षणं सुखत्वममृतत्वं च प्राणेषु योज्यमिति तद् ... योऽप्यसावित्यादिना । सति बुद्ध्याद्युपाधावात्मनो द्रष्टृत्वादिः, तदभावे सुषुप्तौ तदभाव इत्यसङ्गत्वज्ञानार्थं 'न शृणोति न पश्यति' इति परमात्मानं प्रकृत्योक्तम् । तथा तत्रैवात्मनः सुखत्वमुक्तं न प्राणस्य । यतः श्रुत्यन्तर... त्वमाह तस्मादित्यर्थः । आमयो नाशादिदोषः तत्सहितं सामयम् । आर्तं नश्वरम् । 'स एवाधस्तात् ...

भामतीव्याख्या

प्राणस्य प्रकरणमपि तु यदायत्तः प्राणस्तस्य, स चात्मेत्यात्मन एव प्रकरणम् । शङ्कते—प्रकरणान्त इति ... रणसमाप्तावित्यर्थः । निराकरोति—न । स भगव इति । संदंशन्यायेन हि भूम्न एतत्प्रकरणं, स चेद्भूमा प्राणः स्यैतत्प्रकरणं भवेत् । तच्चायुक्तमित्युक्तम् ॥ ८ ॥ न केवलं श्रुतेर्भूमात्मता परमात्मनः, लिङ्गादपीत्याह सूत्रकारः— ... यदपि पूर्वपक्षिणा कथंचिन्नीतं तदनुभाष्य भाष्यकारो दूषयति—योऽप्यसौ सुषुप्तावस्थायामिति ।

आनन्दगिरीयव्याख्या

रूप्यान्मैवमित्याह—तमिति । उपक्रमे शोकस्योपसंहारे तमसो निवृत्तिवचनाद्विप्रतिपत्तिमाशङ्क्याह—तम इतीति । कार्यनिवृत्तिरुपसंहारे कार्यनिवृत्त्या कारणनिवृत्तिरुपक्रमे विवक्षितेत्यविप्रतिपत्तिरित्यर्थः । किंच प्राणो यदायत्तस्तं प्रकरणी भूमेत्याह—प्राणान्ते चेति । प्राणस्यान्यायत्ततैव कुतोऽत्रोच्यते, तत्राह—आत्मत इति । प्राणाधिकरणस्य पूर्वोक्तस्य भूम्नो न परमात्मतेति शङ्कते—प्रकरणेति । भूम्न एव सर्वनाम्नानुकर्षणाद्वाक्यशेषस्यापि तदर्थत्वात् ... प्राणस्य भूमतेत्याह—नेत्यादिना । किंच भूमरूपतापि प्राणे न मुख्येत्याह—वैपुल्येति । प्राणस्य स्वविकारापेक्षया ... मुख्यमिति वक्तुं सुतरामित्युक्तम् ॥ ८ ॥ परो भूमेत्यत्र लिङ्गान्तरमाह—धर्मेति । सूत्रं व्याकरोति—अपि चेति । ... भूम्नि दर्शनाद्यभावं दर्शयति—यत्रेति । कथमेतावता परात्मधीः, तत्राह—परमात्मनीति । प्राणेऽपि तदुक्त... योऽपीति । उक्तो 'न शृणोति' इत्यादिनेति शेषः । प्राणस्वभावविवक्षया तस्यानुक्तत्वे हेतुमाह—परमात्मेति । ... इत्यादेरुक्तेरित्यर्थः । स्वप्नजागरितयोः सति मनसि दर्शनादिव्यवहारात्तदभावे स्वापे तदभावादन्वयव्यतिरेकाभ्यां ... नोत्मकृतः । स तु स्वतोऽलिङ्ग इति मत्वा 'न शृणोति' इत्यादिना सर्वव्यवहाराभावः सुषुप्तावुक्तो न प्राणविवक्षया पर... भूम्नः श्रुतं सुखत्वं प्राणेऽपि स्यादित्युक्तं प्रत्याह—यदपीति । तस्य सुखत्वे मानमाह—यत इति । ... —इहापीति । तस्यैव सुखत्वं प्रतियोगिप्रत्युक्त्या स्फुटयति—नेति । उक्तश्रुतेरर्थमाह—सामयेति । ... सामयम् । धर्मद्वयमुक्त्वा धर्मान्तरमाह—यो वा इति । प्राणस्यापि दर्शिनममृतत्वमित्याशङ्क्याह—विकाराणामिति ...

महिमप्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः परमात्मन्येवोपपद्यन्ते न्यत्र । तस्माद्भूमा परमात्मेति सिद्धम् ॥ ९ ॥

## अक्षरमम्बरान्तधृतेः ॥ १० ॥




अक्षरं प्रणवः किं वा ब्रह्म लोकेऽक्षराभिधा ॥ वर्णे प्रसिद्धा तेनात्र प्रणवः स्यादुपास्तये ॥ १ ॥
अव्याकृताधारतोक्तेः सर्वधर्मनिषेधतः ॥ शासनाद्द्रष्टृतादेश्च ब्रह्मैवाक्षरमुच्यते ॥ २ ॥

कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु' ( बृ० ३।८।७,८ ) इत्यादि श्रूयते । तत्र संशयः—किमक्षरशब्देन वर्ण उच्यते किंवा परमेश्वर इति । तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात्, प्रसिद्ध्यतिक्रमस्य अयुक्तत्वात्, 'ओंकार एवेदं सर्वम्' ( छा० २।२३।३ ) इत्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन

रत्नप्रभाव्याख्या

फलं, 'स एवेदं सर्वम्' इति सर्वात्मत्वं च श्रुतं, तस्माद्भूमाध्यायो निर्गुणे समन्वित इति सिद्धम् ॥ ९ ॥ **अक्षरमम्बरान्तधृतेः** । बृहदारण्यकं पठति—**कस्मिन्न्विति** । यद्भूतं भवच्च भविष्यच्च तत्सर्वं कस्मिन्नोतमिति गार्ग्या पृष्टेन मुनिना अव्ययेनाव्याकृताकाशः कार्यमात्राश्रय उक्तः । आकाशः कस्मिन्नोत इति द्वितीयप्रश्ने स मुनिरुवाच, तदव्याकृतकारणमेतदक्षरमस्थूलादिरूपमित्यर्थः । उभयत्राक्षरशब्दप्रयोगात्संशयः । यथा सत्यशब्दो ब्रह्मणि रूढ इति ब्रह्म कं तथाक्षरशब्दो वर्णे रूढ इति दृष्टान्तेन पूर्वपक्षः । तत्र ओंकारोपास्तिः फलं, सिद्धान्ते निर्गुणब्रह्मधीरिति विनु न क्षरतीत्यचलत्वानाशित्वयोगाद्ब्रह्मण्यप्यक्षरशब्दो मुख्य इत्यत आह—**प्रसिद्ध्यतिक्रमस्येति** । 'रूढिर्योगमपहरति' इति न्यायादित्यर्थः । वर्णस्य ओंकारस्य सर्वाश्रयत्वं कथमित्याशङ्क्य ध्यानार्थमिदं यथा श्रुत्यन्तरे सर्वात्मत्वमित्याह—र इति । प्रश्नप्रतिवचनाभ्यामाकाशान्तजगदाधारत्वे तात्पर्यनिश्चयात्र ध्यानार्थता, अतस्तल्लिङ्गबलाद्रूढिं बाधित्वा

भामतीव्याख्या

रसङ्ख्यात्मैव । न प्राणः । परमात्मप्रकरणात् । अन्यदार्तम् । विनश्वरमित्यर्थः । अतिरोहितार्थमन्यत् ॥ ९ ॥ **अक्षरमम्बरान्तधृतेः** । अक्षरशब्दः समुदायप्रसिद्ध्या वर्णेषु रूढः । परमात्मनि चावयवप्रसिद्ध्या यौगिकः । अवयवप्रसिद्धेश्च प्रसिद्धिर्बलीयसीति वर्णा एवाक्षरम् । नच वर्णेष्वाकाशस्योतत्वप्रोतत्वे नोपपद्येते, सर्वस्यैव रूपधेयस्य नामधेयात्मकत्वात् । रूपधेयं नामधेयसंभिन्नमनुभूयते, गौरयं वृक्षोऽयमिति । न चोपायत्वात्तत्संभेदसंभवः । नहि धूमोपाया वह्निधीर्धूमसंभिन्नं गाहते धूमोऽयं वह्निरिति, किंतु वैयधिकरण्येन धूमाद्वह्निरिति । भवति तु नामधेयसंभिन्नो रूपधेयप्रत्ययो डित्थोऽयमिति । शब्दानुपायेऽपि रूपधेयप्रत्यये लिङ्गेन्द्रियजन्मनि नामसंभेदो दृष्टः । तस्मान्नामसंभिन्ना पृथिव्यादयोऽम्बरान्ता नाम्ना ग्रथिताश्च, नामानि च ओंकारात्मकानि तद्व्याप्तत्वात् । 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक्' । अत ओंकारात्मकाः पृथिव्यादयोऽम्बरान्ता इति वर्णा एवाक्षरं न परमात्मेति प्राप्तम् । एवं प्राप्तेऽभिधीयते—अक्षरं, न तु वर्णाः । कुतः । अम्बरान्तधृतेः । न खल्वम्बरान्तानि पृथिव्यादीनि वर्णा धारयितुमर्हन्ति, किंतु परमात्मैव । आत्मविकारत्वात् । नच नामधेयात्मकं रूपधेयमिति युक्तं, स्वरूपभेदात्, उपायभेदात्, अर्थक्रियाभेदाच्च । तथाहि—

आनन्दगिरीयव्याख्या

मुख्यममृतत्वमित्याह—**अत इति** । आर्तमार्तिग्रस्तं । नाशीति यावत् । प्रकृतोपयुक्तानि धर्मान्तराण्याह—**तथेति** । 'स एवाउपरिष्टात्' इत्यादिना सर्वगतत्वं, 'स एवेदं सर्वम्' इति सर्वात्मत्वमुक्तम् । श्रुतिलिङ्गप्रकरणेभ्यो भूमा परमात्मेति तत्प्रतिपत्त्यर्थमित्युपसंहरति—**तस्मादिति** ॥ ९ ॥ भूम्नि श्रुतधर्माणां परत्रोपपत्त्या परो भूमेत्युक्तम् । अधुना तेनैव न्यायेनाक्षरे श्रुतजगद्धिपरस्मिन्नुपपत्तेरक्षरं परं ब्रह्मेत्याह—**अक्षरमिति** । बृहदारण्यकवाक्यं पठति—**कस्मिन्निति** । यदूर्ध्वं दिवो यदधस्तात्पृथिव्या द्यावापृथिव्यौ यदन्तरिक्षं यद्भूतं भवद्भविष्यच्च तत्सर्वं कस्मिन्नोतं प्रोतं चेति प्रश्ने याज्ञवल्क्येनाकाशे तदोतं च प्रोतं चेति निरस्ते, अपृच्छत्, आकाशोऽव्याकृताख्यः कस्मिन्नोतप्रोतत्वेन तिष्ठतीति । याज्ञवल्क्यस्त्वाह, हे गार्गि, यत्त्वया पृष्टमाकाशस्याधिकरणं रमस्थूलादिविशेषणं ब्रह्मविदो वदन्तीत्युदाहरणार्थः । उभयत्राक्षरशब्दप्रयोगप्रतीत्या संशयमाह—**तत्रेति** । सत्यशब्दस्य ब्रह्मणि श्वरो भूमेत्युक्तत्वाद्वाप्यक्षरशब्दस्य वर्णे मुख्यत्वादोंकार एवाक्षरमिति पूर्वपक्षयति—**तत्रेत्यादिना** । अक्षरब्राह्मणस्य निर्विशेषे योक्तेः संगतयः । ओंकारोपास्तिर्ब्रह्मधीरित्युभयत्र फलम् । न क्षरतीत्यक्षरमित्यवयवप्रसिद्ध्या परस्मिन्नपि शब्दोपपत्तिमाशङ्क्य मपहरति' इति न्यायेनाह—**प्रसिद्धीति** । वर्णस्य चाम्बरान्तधारणायोगादपुमर्थत्वाच्च तज्ज्ञानाद्ब्रह्मैव ग्राह्यमित्याशङ्क्याह—**इति** । उपास्तिद्वारा पुमर्थत्वे सिद्धे, अभिधेयस्य च गौरयं वृक्षोऽयमिति शब्दसामानाधिकरण्यात्, धूमाग्निवदुपायोपेयतामात्रेण तदयोरुपाये लिङ्गादुत्थज्ञाने नामसंभेदादभिधानाभिधेययोरैक्यात्, ओंकारमात्रनामाश्च सर्वस्य श्रुतत्वात्तद्धृतिरित्यर्थः । रूढेरिदं ब्राह्मणमोंका-

सर्वात्मकत्वावधारणात्, वर्ण एवाक्षरशब्द इति, एवं प्राप्त उच्यते—पर एवात्माक्षरशब्द-
कस्मात् । अम्बरान्तधृतेः—पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् । तत्र हि
देः समस्तविकारजातस्य कालत्रयविभक्तस्य 'आकाश एव तदोतं च प्रोतं च' इत्या-
ष्ठितत्वमुक्त्वा 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यनेन प्रश्नेनेदमक्षरमवतारि-
चोपसंहृतम्—'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति । नचेयमम्ब-
ब्रह्मणोऽन्यत्र संभवति । यदपि 'ॐकार एवेदं सर्वम्' इति तदपि ब्रह्मप्रतिपत्तिसाध-
त्वार्थं द्रष्टव्यम् । तस्मान्न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्र-
स्यादेतत् । कार्यस्य चेत्कारणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते, प्रधानकारणवादिनो-
पद्यते । कथमम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिः । अत उत्तरं पठति—

## सा च प्रशासनात् ॥ ११ ॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म । कस्मात् । प्रशासनात् । प्रशासनं हीह श्रूयते-
वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ० ३।८।९) इत्यादि
च पारमेश्वरं कर्म । नाचेतनस्य प्रशासनं भवति । न ह्यचेतनानां घटादिकारणानां
घटादिविषयं प्रशासनमस्ति ॥ ११ ॥

रत्नप्रभाव्याख्या

योगवृत्तिर्ग्राह्येति सिद्धान्तयति—**एवमित्यादिना** ॥ १० ॥ आकाशं भूतं कृत्वा शङ्कते—**स्यादेतदिति**।
क्षाया अत्र श्रुतेर्मैवमित्याह—**सा चेति** । सूत्रं व्याचष्टे—**सा चेति** । चकार आकाशस्य भूतत्वनिरा-

भामतीव्याख्या

शब्दत्वसामान्यात्मकानि श्रोत्रग्राह्याण्यभिधेयप्रत्ययार्थक्रियाणि नामधेयान्यनुभूयन्ते । रूपधेयानि तु घटपटादीनि
मान्यात्मकानि चक्षुरादीन्द्रियग्राह्याणि मधुधारणप्रावरणाद्यर्थक्रियाणि च भेदेनानुभूयन्ते इति कुतो नाम-
डित्थोऽयमिति शब्दसामानाधिकरण्यप्रत्ययः । न खलु शब्दात्मकोऽयं पिण्ड इत्यनुभवः, किंतु यो नानादेश-
सोऽयं संनिहितदेशकाल इत्यर्थः । संज्ञा तु गृहीतसंबन्धैरत्यन्ताभ्यासात्पिण्डाभिनिवेशिन्येव संस्कारोद्बोधसंपाताया-
—'यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् । पिण्ड एव हि दृष्टः सन्संज्ञां स्मारयितुं क्षमः ॥ १ ॥ संज्ञा हि स्मर्य-
न बाधते । संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥ २ ॥' इति । नच वर्णातिरिक्ते स्फोटात्मनि अलौकिके
लोके । न चैष प्रामाणिक इत्युपरिष्टात्प्रवेदयिष्यते । निवेदितं चास्माभिस्तत्त्वबिन्दौ । तस्माच्छ्रोत्रग्राह्याणां
रनुपपत्तेः समुदायप्रसिद्धिबाधनादवयवप्रसिद्ध्या परमात्मैवाक्षरमिति सिद्धम् । ये तु प्रधानं पूर्वपक्षयित्वानेन
वाक्षरमिति सिद्धान्तयन्ति तैरम्बरान्तधृतेरित्यनेन कथं प्रधानं निराक्रियत इति वाच्यम् । अथ नाधिकरण-
प्रशासनाधिकरणता । तथाच श्रुतिः—'एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति
धृतेरित्यनर्थकम् । एतावद्वक्तव्यम्—अक्षरं प्रशासनादिति । एतावतैव प्रधाननिराकरणसिद्धेः । तस्माद्वर्णाक्षरता-
नच स्थूलादीनां वर्णेष्वप्राप्तेरस्थूलमित्यादिनिषेधानुपपत्तेर्वर्णेषु शङ्कैव नास्तीति वाच्यम् । नह्यवश्यं प्राप्तिपूर्व-
भवन्ति, अप्राप्तेष्वपि नित्यानुवादानां दर्शनात् । यथा नान्तरिक्षे न दिवीत्यग्निचयननिषेधानुवादः । तस्मात् य-
**सा च प्रशासनात्** । प्रशासनमाज्ञा चेतनधर्मो नाचेतने प्रधाने वाऽव्याकृते वा संभवति । नच मुख्यार्थसं-

आनन्दगिरीयव्याख्या

रोपास्तिपरमित्युपसंहरति—**वर्ण इति** । पूर्वपक्षमनूद्य सिद्धान्तमवतार्य प्रतिज्ञां व्याकरोति—**एवमिति** । हृदेवा-
स्योक्तं, तत्कथं प्रतिज्ञेत्याह—**कस्मादिति** । हेतुमुक्त्वा व्याकरोति—**अम्बरान्तेति** । आकाशस्यैव प्रश्ने अ-
पृथिव्यादेरित्याशङ्क्याह—**तत्रेति** । तथापि रूढिर्योगाद्बलीयसीत्युक्तमित्याशङ्क्य तात्पर्यवदम्बरान्तधृतिलिङ्गसंगतयो-
पक्रमोपसंहारयोरैकरूप्यावगमात्तात्पर्यसिद्धिरित्याह—**तथाचेति** । लिङ्गस्यान्यथासिद्धिं प्रत्याह—**नचेति** । अक्षरस्य
संभवति लिङ्गमित्याशङ्क्याह—**यदपीति** । स्वरूपभेदादुपायोपेयभेदादर्थक्रियाभेदाच्च शब्दार्थयोरभेदासिद्धिरित्यर्थः ।
बलीयस्त्वे फलितमाह—**तस्मान्नेति** ॥ १० ॥ उत्तरसूत्रापोह्यं चोद्यमाह—**स्यादिति** । कथमम्बरान्तधृतिस्तन्निमित्त-
नाद्यः, घटकुलालवदाश्रयाश्रयित्वायोगात् । द्वितीये व्यभिचारादसाधकतेति मत्वा फलितमाह—**कथमिति** ।
अत इति । प्रतिज्ञां व्याचष्टे—**सा चेति** । प्रधानस्यापि तदुपपत्तेरुक्तत्वादवधारणासिद्धिरित्याह—**कस्मादिति** ।
साधयति—**प्रशासनादिति** । अक्षरस्य सूर्यादौ प्रशासने श्रुतेऽपि कथमीश्वरत्वं, तत्राह—**प्रशासनं चेति** । तस्मा-

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

न्यभावव्यावृत्तेश्च कारणाद्ब्रह्मैवाक्षरशब्दवाच्यम् । तस्यैवाम्बरान्तधृतिः कर्म नान्यस्य कस्य-वत् । किमिदमन्यभावव्यावृत्तेरिति । अन्यस्य भावोऽन्यभावस्तस्माद्व्यावृत्तिरन्यभावव्यावृत्ति-रिति । एतदुक्तं भवति—यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावादिदमम्बरान्तवि-ारणमक्षरं व्यावर्तयति श्रुतिः—'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ' बृ० ३।८।११ ) इति । तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि संभवति । द्रष्टृत्वादिव्यपदेशस्तु न भवत्यचेतनत्वात् । तथा 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ ान्यदतोऽस्ति विज्ञातृ' इत्यात्मभेदप्रतिषेधात्, न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम् । मचक्षुष्कमश्रोत्रमवागमनः' ( बृ० ३।८।८ ) इति चोपाधिमत्ताप्रतिषेधात् । न हि निरुपाधिकः ारीरो नाम भवति । तस्मात्परमेव ब्रह्माक्षरमिति निश्चयः ॥ १२ ॥

## ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

४ अधिकरणम्

त्रिमात्रप्रणवे ध्येयमपरं ब्रह्म वा परम् ॥ ब्रह्मलोकफलोक्त्यादेरपरं ब्रह्म गम्यते ॥ १ ॥
ईक्षितव्यो जीवघनात्परस्तत्प्रत्यभिज्ञया ॥ भवेद्ध्येयं परं ब्रह्म क्रममुक्तिः फलिष्यति ॥ २ ॥

'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' इति प्रकृत्य

---

रत्नप्रभाव्याख्या

तःपातिनः श्रुतसर्वकार्याश्रयत्वायोगादव्याकृतमज्ञानमेवाकाशः प्रधानशब्दित इति तदाश्रयत्वाच्चाक्षरं न प्रधानमित्यर्थः । विषयत्वेन धृतौ ॥११॥ प्रश्नपूर्वकं सूत्रं व्याकरोति—**किमिदमिति** । षष्ठ्यावृत्तिरिति भ्रान्तिं निरस्यति—**एत-** । अम्बरान्तस्याधारमक्षरं श्रुतिरचेतनत्वाद्व्यावर्तयतीत्यर्थः । जीवनिरासपरत्वेनापि सूत्रं योजयति—**तथेति** । अन्यभावो िषेधादिति सूत्रार्थः । तर्हि शोधितो जीव एवाक्षरं न पर इत्यत आह—**न हीति** । शोधिते जीवत्वं नास्तीत्यर्थः । र्गिब्राह्मणं निर्गुणाक्षरे समन्वितमिति सिद्धम् ॥ १२ ॥ **ईक्षतिकर्मव्यपदेशात्सः** । प्रश्नोपनिषदमुदाहरति—ति । पिप्पलादो गुरुः सत्यकामेन पृष्टो ब्रूते, हे सत्यकाम, परं निर्गुणमपरं सगुणं ब्रह्मैतदेव योऽयं ॐकारः । स मेव विष्णोस्तस्य प्रतीकः । तस्मात्प्रणवं ब्रह्मात्मना विद्वानेतेनैव ॐकारध्यानेनायतनेन प्राप्तिसाधनेन यथाध्यानं परम-

भामतीव्याख्या

द्भावात्तत्त्वमुचितमिति भावः ॥ ११ ॥ **अन्यभावव्यावृत्तेश्च** । अम्बरान्तविधरणस्याक्षरस्येश्वरादन्यद्वर्णा वा प्रधानं वा-तं वा तेषामन्येषां भावोऽन्यभावस्तमत्यन्तं व्यावर्तयति श्रुतिः—'तद्वा एतदक्षरं गार्गि' इत्यादिका । अनेनैव सूत्रेण जीव-रता निषिद्धेत्यत आह—**तथेति** । 'नान्यत्' इत्यादिकया हि श्रुत्यात्मभेदः प्रतिषिध्यते । तथा चोपाधिभेदाद्भिन्ना जीवा भवन्त्यभेदाभिधानादित्यर्थः । इतोऽपि न शारीरस्याक्षरशब्दतेत्याह—**अचक्षुष्कमिति** । अक्षरस्य चक्षुराद्युपाधिं ी श्रुतिरौपाधिकस्य जीवस्याक्षरतां निषेधतीत्यर्थः । तस्माद्वर्णप्रधानाव्याकृतजीवानामसंभवात्, संभवाच्च परमात्मनः, परमात्मै-ति सिद्धम् ॥ १२ ॥ **ईक्षतिकर्मव्यपदेशात्सः** । 'कार्यं ब्रह्म जनप्राप्तिफलत्वादर्थभेदतः । दर्शनध्यानयोर्ध्येयमपरं ब्रह्म ।' 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः सर्वगतपरब्रह्मवेदने तद्भावापत्तौ 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति न देशविशेषप्रा-यते । तस्मादपरमेव ब्रह्मेह ध्येयत्वेन चोद्यते । न चेक्षणस्य लोके तत्त्वविषयत्वेन प्रसिद्धेः परस्यैव ब्रह्मणस्तथाभावात्, ध्यायतेश्च

आनन्दगिरीयव्याख्या

तस्यापि स्वकार्ये प्रशासनं सिध्यति, नेत्याह—**न हीति** । तथाचाम्नातव्यप्रशासनलिङ्गान्न प्रधानमक्षरमित्यर्थः ॥ ११ ॥ देनिरासेन ब्रह्मादाने हेत्वन्तरमाह—**अन्येति** । प्रतिज्ञाभ्यां सूत्रं योजयति—**अन्यभावेति** । हेत्वर्थं प्रश्नपूर्वकमाह—**किमि-** । अन्यभावाद्व्यावृत्याक्षरस्याभावत्वं विधेयमिति भ्रमव्यावृत्त्यर्थमभिप्रेतमर्थमाह—**एतदिति** । प्रधानमन्यदित्युक्तम् । द्रष्टेति रणम् । प्रधानस्यापि रूपादिराहित्याददृष्टत्वादियोगादुक्तश्रुतौ कुतोऽक्षरस्य ततो व्यावृत्तिः, तत्राह—**तत्रेति** । एतेन सूत्रे-जीवस्यापि निरस्तमित्याह—**तथेति** । अक्षरमतःशब्दार्थः । इतश्च जीवस्य नाक्षरशब्दतेत्याह—**अचक्षुष्कमिति** । उपा-निषेधेऽपि तद्वतो निषेधाभावायुक्तं तस्याक्षरत्वमित्याशङ्क्याह—**न हीति** । अनन्यथासिद्धलिङ्गमङ्क्तियोगवृत्त्या ध्येयब्रह्मपरमक्षर-त्युपसंहरति—**तस्मादिति** ॥ १२ ॥ ॐकारस्याक्षरत्वेन पूर्वपक्षे बुद्धिसांनिध्यात्सेन ध्यातव्यं पुरुषं निरूपयति—**ईक्षतीति** । वाक्यं पठति—**एतदिति** । पिप्पलादो नामाचार्यः सत्यकामेन पृष्टो व्याचष्टे । हे सत्यकाम, परं निर्विशेषमपरं च कार्यं यद्ब्रह्म ोऽयमोंकारः । स हि प्रतिमेव विष्णोस्तस्य प्रतीकः । तस्मात्प्रणवं ब्रह्मात्मना विद्वानेतेनोंकारध्यानेनायतनेन प्राप्तिसाधनेन परापर-

श्रूयते—'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत'(प्र० ५।२,५) इ-
स्मिन्वाक्ये परं ब्रह्माभिध्यातव्यमुपदिश्यत आहोस्विदपरमिति । एतेनैवायतनेन एक-
रमन्वेतीति प्रकृतत्वात्संशयः । तत्रापरमिदं ब्रह्मेति प्राप्तम् । कस्मात् । 'स तेजसि सं-
'स सामभिरुन्नीयते ब्रह्मलोकम्' इति च तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमानत्वात् ।
परब्रह्मविद्देशपरिच्छिन्नं फलमश्नुवीतेति युक्तम्, सर्वगतत्वात्परस्य ब्रह्मणः । ननु
ब्रह्म परं पुरुषमिति विशेषणं नोपपद्यते । नैष दोषः । पिण्डापेक्षया प्राणस्य परत्वोपपत्तेः ।
इत्येवं प्राप्तेऽभिधीयते—परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते । कस्मात् । ईक्षतिकर्मव्यपदे-
शात् । ईक्षतिर्दर्शनम् । दर्शनव्याप्यमीक्षतिकर्म । ईक्षतिकर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य
वाक्यशेषे व्यपदेशो भवति—'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति ।
तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति । मनोरथकल्पितस्याप्यभिध्यायति-

---

रत्नप्रभाव्याख्या

परं चान्वेति प्राप्नोतीति प्रकृत्य मध्ये एकमात्रद्विमात्रोङ्कारयोर्ध्यानमुक्त्वा ब्रवीति—**यः पुनरिति** । इ-
ब्रह्मोङ्कारयोरभेदोपक्रमात् । यो ह्यकारादिमात्रात्रये एकस्या मात्राया अकारस्य सृष्ट्यादिकं जाग्रदादिविभूतिं
सम्यग्ज्ञाता । एका मात्रा यस्योङ्कारस्य स एकमात्रः । एवं मात्राद्वयस्य सम्यग्विभूतिज्ञाने द्विमात्रस्तथा त्रि-
पुरुषं योऽभिध्यायीत स ॐकारविभूतित्वेन ध्यातैः सामभिः सूर्यद्वारा ब्रह्मलोकं गत्वा परमात्मानं पुरु-
संशयं तद्बीजं चाह—**किमित्यादिना** । अस्मिन् त्रिमात्रवाक्य इत्यर्थः । पूर्वत्र पूर्वपक्षत्वेनोक्त ॐकारे
निश्चीयत इति प्रसङ्गसंगतिः । यद्वा पूर्वत्र वर्णे रूढस्याक्षरशब्दस्य लिङ्गाद्ब्रह्मणि वृत्तिरुक्ता, तद्वदत्रापि
त्परशब्दस्य हिरण्यगर्भे वृत्तिरिति दृष्टान्तेन पूर्वपक्षयति—**तत्रापरमिति** । कार्यपरब्रह्मणोरुपास्तिरभय-
सकः । सूर्ये संपन्नः प्रविष्टः । ननु वसुदान ईश्वर इति ध्यानाद्विन्दते वस्वित्यल्पमपि फलं ब्रह्मोपा-
आह—**न हीति** । अन्यत्र तथात्वेऽपि अत्र परवित्परमपरविदपरमन्वेतीत्युपक्रमात्परविदोऽपरप्राप्ति-
विरोधात् । न चात्र परप्राप्तिरेवोक्तेति वाच्यं, परस्य सर्वगतत्वादत्रैव प्राप्तिसंभवेन सूर्यद्वारा गतिवै-
पक्रमानुगृहीतादपरप्राप्तिरूपाल्लिङ्गात्परं पुरुषमिति परश्रुतिर्बाध्येत्यर्थः । परश्रुतेर्गतिं पृच्छति—**नन्विति** ।
विराट् तदपेक्षया सूत्रस्य परत्वमिति समाध्यर्थः । सूत्रे सशब्द ईश्वरपर इति प्रतिज्ञातत्वेन तं व्याचष्टे-
उपासक एतस्माद्धिरण्यगर्भात्परं पुरुषं ब्रह्माहमितीक्षत इत्यर्थः । नन्वीक्षणविषयोऽप्यपरोऽस्तु, तत्राह—

भामतीव्याख्या

तेन समानविषयत्वात्, परब्रह्मविषयमेव ध्यानमिति सांप्रतम्, समानविषयत्वस्यैवासिद्धेः । परो हि पुरुषो ध्या-
दर्शनविषयः । नच तत्त्वविषयमेव सर्वं दर्शनं, अनृतविषयस्यापि तस्य दर्शनात् । नच मननं दर्शनं, तस्य तत्त्वे-
मननाद्भेदेन तत्र तत्र दर्शनस्य निर्देशात् । नच मननमपि तर्कापरनामावश्यं तत्त्वविषयम् । यथाहुः—'तर्कोऽप्रति-
परमेव ब्रह्मेह ध्येयम् । तस्य च परत्वं शरीरापेक्षयेति । एवं प्राप्त उच्यते—'ईक्षणध्यानयोरेकः कार्यकारणभूतयोः
तत्त्वविषयत्वं यथेक्षतेः ॥' ध्यानस्य हि साक्षात्कारः फलम् । साक्षात्कारश्चोत्सर्गतस्तत्त्वविषयः । क्वचित्तु बाधकेन

आनन्दगिरीयव्याख्या

योरेकतरं यथाध्यानमनुगच्छतीति प्रकृत्यैकमात्रद्विमात्रोपास्तिं दर्शयित्वा ब्रवीति, यः पुनरोमित्येतदक्षरं त्रिमात्रमिति ।
द्वितीयात्वेन नेया, ब्रह्मोंकाराभेदोपक्रमात् । तथाविधमक्षरं सूर्यान्तस्थं परं ध्यायीत, स सूर्यं प्राप्तः सामभिर्ब्रह्मलोकं
णार्थः । सनिमित्तं संशयमाह—**किमिति** । अक्षरशब्दस्य वर्णे रूढस्यापि जगदायतनत्वलिङ्गेन जघन्या योगवृत्ति-
च्छिन्नफलश्रुतिलिङ्गेन परशब्दस्यापेक्षिकपरत्वविशिष्टे हिरण्यगर्भे वृत्तिरिति पूर्वपक्षयति—**तत्रेति** । उक्तश्रुत्यर्थे
संगतयः । अपरस्य परस्य वा ब्रह्मणो ध्यानं पूर्वोत्तरपक्षयोः फलम् । ननु परापरत्वेन ब्रह्म विभज्य परमि-
कुतः शङ्केति शङ्कते—**कस्मादिति** । परायोगिफलोक्त्या शङ्कायाः सावकाशत्वमाह—**स इति** । उपासकः सर्व-
फलं परस्मिन्नसंभावितं, तदाह—**न हीति** । तद्विदोऽपि तथाभावादिति शेषः । विशेषणानुपपत्तिं शङ्कते—**नन्विति**
**—नेति** । पिण्डः स्थूलो देहः । प्राणः सूत्रात्मा । अपरब्रह्मोपास्तिपरं वाक्यमित्युपसंहर्तुमितिशब्दः । पूर्वपक्ष-
**एवमिति** । तत्र प्रतिज्ञां पूरयति—**परमेवेति** । लिङ्गाद्ध्यायतेरपरविषयत्वोक्तेर्नियमासिद्धिरित्याह—**कस्मादिति** ।
**ईक्षतीति** । ईक्षतेर्धातोरीक्षणमेव कर्म तद्व्यपदेशान्नापेक्षितधीरित्याशङ्क्य व्याकरोति—**ईक्षतिरिति** । तथापि
भ्रान्ति मत्वाह—**दर्शनेति** । तस्य व्यपदेशादित्युक्त पक्षधर्मत्वासिद्धिमाशङ्क्यापेक्षितं पूरयन्विवक्षितमर्थमाह—ईक्ष-
त्वेन वाक्यशेषे निर्दिश्यमानमपि ब्रह्मापरमेवेत्याशङ्क्याह—**तत्रेति** । ईक्षतिध्यायत्योर्निर्धारणार्था सप्तमी । रत्न-

ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टमित्यतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते । स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते । न्वभिध्याने परः पुरुष उक्तः, ईक्षणे तु परात्परः, कथमितर इतरत्र प्रत्यभिज्ञायत इति । अत्रोच्यते—परपुरुषशब्दौ तावदुभयत्र साधारणौ । नचात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते, येन तस्मात्परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात् । कस्तर्हि जीवघन ति । उच्यते—घनो मूर्तिः । जीवलक्षणो घनो जीवघनः । सैन्धवखिल्यवद्यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीवघन इति । अपर आह—'स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः परश्च लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते । जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि संघातोपपत्तेर्भवति ब्रह्मलोको जीवघनः । तस्मात्परो यः परमात्मेक्षणकर्मभूतः स एवाभिध्यानेऽपि कर्मभूत इति गम्यते । परं पुरुषमिति च विशेषणं परमात्मपरिग्रह एवावक-

रत्नप्रभाव्याख्या

। नन्वीक्षणं प्रमात्वाद्विषयसत्यतामपेक्षत इति भवतु सत्यः पर ईक्षणीयः । ध्यातव्यस्त्वसत्योऽपरः किं न स्यादित्यत —स एवेति । श्रुतिभ्यां प्रत्यभिज्ञानात्स एवायमिति सौत्रः सशब्दो व्याख्यातः । अत्रैवं सूत्रयोजना—ॐकारे यो स पर एवात्मा, वाक्यशेषे ईक्षणीयत्वोक्तेः । अत्र च श्रुतिप्रत्यभिज्ञानात्स एवायमिति । ननु शब्दभेदान्न प्रत्यभिज्ञेति —नन्विति । परात्पर इति शब्दभेदमङ्गीकृत्य श्रुतिभ्यामुक्तप्रत्यभिज्ञाया अविरोधमाह—अत्रेति । ननु एतस्माज्जीवघनात्' इत्येतत्पदेनोपक्रान्तध्यातव्यपरामर्शादीक्षणीयः परात्मा ध्येयादन्य इत्यत आह—न चात्रेति । ध्यानस्य तत्फलेक्षच लोके समानविषयत्वाद्ध्येय एवेक्षणीयः । एवं चोपक्रमोपसंहारयोरेकवाक्यता भवतीति भावः । 'स सामभिरुन्नीयते लोकम्' 'स एतस्माज्जीवघनात्' इत्येतत्पदेन संनिहिततरो ब्रह्मलोकस्वामी परामृश्यत इति प्रश्नपूर्वकं व्याचष्टे—कस्तर्हीत्या। 'मूर्तौ घनः' इति सूत्रादिति भावः । सैन्धवखिल्यो लवणपिण्डः । खिल्यवदल्पो भावः परिच्छेदो यस्य स खिल्य। एतत्पदेन ब्रह्मलोको वा परामृश्यत इत्याह—अपर इति । जीवघनशब्दस्य ब्रह्मलोके लक्षणां दर्शयति—जीहीति । व्यष्टिकरणाभिमानिनां जीवानां घनः संघातो यस्मिन्सर्वकरणाभिमानिनि स जीवघनः तत्स्वामिकत्वात्परंबन्धेन लोको लक्ष्य इत्यर्थः । तस्मात्परः सर्वलोकातीतः शुद्ध इत्यर्थः । परपुरुषशब्दस्य परमात्मनि मुख्यत्वाच्च स येय इत्याह—परमिति । यस्मात्परं नापरमस्ति किंचित् स एव मुख्यः परः न तु पिण्डात्परः सूत्रात्मेत्यर्थः । किंच

भामतीव्याख्या

भवेत् । न चासत्यपवादे शक्य उत्सर्गस्त्यक्तुम् । तथा चास्य तत्त्वविषयत्वात्तत्कारणस्य ध्यानस्यापि तत्त्वविषयत्वम् । अपिच शेषेणैकवाक्यत्वसंभवे न वाक्यभेदो युज्यते । संभवति च परपुरुषविषयत्वेनार्थप्रत्यभिज्ञानात् समभिव्याहाराच्चैकवाक्यता । तदनुच परात्पर इत्यत परादिति जीवघनविषयं द्रष्टव्यम् । तस्मात्तु परः पुरुषो ध्यातव्यश्च द्रष्टव्यश्च भवति । तदिदमुक्तम्—न चात्र घनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते । किंतु जीवघनात् परात् परो यो ध्यातव्यो द्रष्टव्यश्च तमेव तुं जीवघनो जीवः खिल्यभावमुपाधिवशादापन्नः स उच्यते । 'स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यनन्तरवाक्यनिर्दिष्टो ब्रह्मलोको वा

आनन्दगिरीयव्याख्या

भिधीयते । अत एव दर्शनविशेषणम्—सम्यगिति । अस्तु तर्हीक्षतिकर्मणोऽन्यस्यैव ध्येयत्वमित्याशङ्क्य सौत्रं सशब्दं व्याचष्टे—ति । निर्देशवैषम्यान्न प्रत्यभिज्ञेति शङ्कते— नन्विति । वैषम्यमुपेत्य प्रत्यभिज्ञोपपत्तिमाह—अत्रेति । एतच्छब्दस्य प्रकृतगाायतिकर्मणश्च प्रकृतत्वात्तस्यैवैतच्छब्दसमानाधिकृतपञ्चम्यन्तपरशब्देन प्रत्यभिज्ञानादभिध्यातव्यविषयपरशब्दस्य वाक्यशेषे विषयत्वाज्जीवघनोऽभिध्यातव्यः, तस्मात्परात्परः परमेश्वरोऽन्य एवेक्षतिकर्मभूत इत्याशङ्क्याह—नचेति । यो ध्येयः स एव म्यगधियोऽपीक्षणस्य विषयः संभवति एकवाक्यत्वे वाक्यभेदस्यायोगात्, एतच्छब्दस्य संनिहितपरामर्शित्वेऽपि संनिहिततरजीवत्वात्, जीवघनशब्दस्य च ध्येयविषयत्वाभावात्,तस्येक्षितव्यस्य चैकत्वेत्यर्थः । उपक्रमोपसंहारयोरेकवाक्यतार्थमुपक्रमे यो ध्यातव्यः पसंहारेऽपीक्षणगोचरश्चेत्तर्हि जीवघनशब्दस्य पृथगर्थो वक्तव्यः, न हि जीवघनपदं प्रमत्तगीतमिति शङ्कते—कस्तर्हीति । 'मूर्तौ ति सूत्रेणाह—उच्यत इति । षष्ठीसमासं व्यावर्तयति—जीवेति । उक्तमर्थं दृष्टान्तेनाह—सैन्धवेति । खिल्यभावोऽल्पत्वम् । वच्छिन्नस्य परस्याल्पत्वं, तत्राह—उपाधीति । तत्र पञ्चम्यन्तपरशब्दोपपत्तिमाह—परश्चेति । एतच्छब्दस्य प्रकृतपरामर्शिस्य पक्षान्तरमाह—अपर इति । कया वृत्त्या जीवघनशब्दो ब्रह्मलोकं ब्रूते, तत्राह—जीवानामिति । परिच्छिन्नकरणावमनवच्छिन्नकरणात्मनि हिरण्यगर्भेऽन्तर्भावात्तस्य जीवपूर्णतया तद्घनत्वाल्लोकोऽपि जीवघन इत्युपचर्यत इत्यर्थः । तस्य कारणत्मा परस्मादित्याह—तस्मादिति । ईक्षणध्यानयोः कार्यकारणभावादेकविषयत्वेनाह—स एवेति । परस्यैव ध्यातव्यत्वे

ल्पते । परो हि पुरुषः परमात्मैव भवति यस्मात्परं किंचिदन्यन्नास्ति, 'पुरुषान्न परं
काष्ठा सा परा गतिः' इति च श्रुत्यन्तरात् । 'परं चापरं च ब्रह्म यदोंकारः' इति च
न्तरमोंकारेण परं पुरुषमभिध्यातव्यं ब्रुवन्परमेव ब्रह्म परं पुरुषं गमयति । 'यथा पादो
विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुच्यते' इति पाप्मविनिर्मोकफलवचनं परमा
भिध्यातव्यं सूचयति । अथ यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नफलं युज्य
अत्रोच्यते—त्रिमात्रेणोंकारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः
सम्यग्दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः ॥ १३ ॥

## दहर उत्तरेभ्यः ॥ १४ ॥




दहरः को वियज्जीवो ब्रह्म वाकाशशब्दतः ॥ वियत्स्यादथवाल्पत्वश्रुतेर्जीवो भविष्य।
बाह्याकाशोपमानेन द्युभूम्यादिसमाहितेः ॥ आत्मापहतपाप्मत्वासेतुत्वाच्च परेश्वरः।

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्त
तद्वाव विजिज्ञासितव्यम्' ( छा० ८।१।१ ) इत्यादिवाक्यं समाम्नायते । तत्र योऽयं द

---

रत्नप्रभाव्याख्या

परशब्देनोपक्रमे निश्चितं परं ब्रह्मैवात्र वाक्यशेषे ध्यातव्यमित्याह—**परं चापरं चेति** । पापनिवृत्तिलिङ्गं
पादोदरः सर्पः । ॐकारे परब्रह्मोपासनया सूर्यद्वारा ब्रह्मलोकं गत्वा परब्रह्मेक्षिता तदेव शान्तमभयं परं
माह—**अत्रोच्यत इति** । एवमेकवाक्यतासमर्थनप्रकरणानुगृहीतपरपुरुषश्रुतिभ्यां परब्रह्मप्रत्यभिज्ञया ब्रह्म
धित्वा वाक्यं प्रणवध्येये ब्रह्मणि समन्वितमिति सिद्धम् ॥ १३ ॥ **दहर उत्तरेभ्यः** । छान्दोग्यमुदाह
भूमविद्यानन्तरं दहरविद्याप्रारम्भार्थोऽथशब्दः । ब्रह्मणोऽभिव्यक्तिस्थानत्वाद्ब्रह्मपुरं शरीरम् । अस्मिन्
हृत्पद्मं तस्मिन्हृदये यदन्तराकाशशब्दितं ब्रह्म तदन्वेष्टव्यं विचार्य ज्ञेयमित्यर्थः । अत्राकाशो जिज्ञास्

भामतीव्याख्या

जीवघनः । स हि समस्तकरणात्मनः सूत्रात्मनो हिरण्यगर्भस्य भगवतो निवासभूमितया करणपरिवृतानां
भवति जीवघनः । तदेवं त्रिमात्रोङ्कारायतनं परमेव ब्रह्मोपास्यम् । अत एव चास्य देशविशेषाधिगतिः फलमुपा
सम्यग्दर्शनोत्पत्तौ मुक्तिः । 'ब्रह्म वेद ब्रह्मैव भवति' इति तु निरुपाधिब्रह्मवेदनविषया श्रुतिः । अपरं तु
मिति मन्तव्यम् ॥ १३ ॥ **दहर उत्तरेभ्यः** । 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरम्' सूक्ष्मं गुहाप्रायं पुण्डरी
रोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' । आगमाचार्योपदेशाभ्यां श्रवणं च, तदविरोधिना तर्केण मननं
तत्पूर्वकेण चादरनैरन्तर्यदीर्घकालासेवितेन ध्यानाभ्यासपरिपाकेण साक्षात्कारो विज्ञानम् । विशिष्टं हि त
विजिज्ञासनम् । अत्र संशयमाह—**तत्रेति** । तत्र प्रथमं तावदेवं संशयः—किं दहराकाशादन्यदेव किंचिदन्वे
च उत दहराकाश इति । यदापि दहराकाशोऽन्वेष्टव्यस्तदापि किं भूताकाश आहो शारीर आत्मा किं वा पर

आनन्दगिरीयव्याख्या

विशेषणमनुकूलयति—**परमिति** । विराडपेक्षया परत्वं सूत्रेऽपीत्युक्तमाशङ्क्य मुख्यं परत्वमुत्सर्गतो ब्रह्म
'यस्मात्परं नापरमस्ति किंचित्' इति श्रुत्या परमात्मानं विशिनष्टि—**यस्मादिति** । ईश्वरस्य परमपुरुषार्थत्वे मानं
परापरे ब्रह्मणी प्रकृत्य परशब्देनापरस्य व्यावर्तनादपि परमेव ब्रह्म ध्यातव्यमित्याह—**परं चेति** । न केवलमुप
र्पीत्याह—**यथेति** । पादोदरः सर्पः । पूर्वपक्षबीजमनूद्य दूषयति—**अथेत्यादिना** । परिशुद्धब्रह्मैक्यज्ञाने देश
ॐकारोपाधिब्रह्मोपास्तौ तदविरुद्धमित्यर्थः । कथं तर्हि 'पुरुषमीक्षते' इति, तत्राह—**क्रमेणेति** । ब्रह्मलोके
विवक्षितेक्षतिवाक्यमित्यर्थः । एकवाक्यताकाङ्क्षप्रकरणानुगृहीतश्रुतिप्रत्यभिज्ञाया देशपरिच्छिन्नफलत्वलिङ्गानुगृहीत
रिच्छिन्नफलत्वलिङ्गानुगृहीतप्रत्यभिज्ञातो बलीयस्त्वाद्ध्यातव्यं परमेवेत्युपसंहरति—**अदोष इति** ॥ १३ ॥ 'परात्
इत्यादिवाक्याद्ध्यातव्यपुरुषनिर्णये परस्य पुरिशयमिति पुरसंबन्धसिद्धेरयमपि पुरसंबन्धी दहराकाशो ब्रह्मेत्याह—**दह**
रवाक्यमुदाहरति—**अथेति** । भूमविद्यानन्तरं विद्यान्तरारम्भार्थोऽथशब्दः । यदिदमिति प्रसिद्धं हृदयं परामृश्य
त्योक्तिः । ब्रह्मपुरं शरीरम् । दहरं सूक्ष्मम् । पुण्डरीकं तदाकारत्वात्प्रकृतं हृदयमेव तत्र परस्य नित्यसंनिधे
हृदयं सप्तम्या परामृश्य तस्यातिसूक्ष्मस्य परस्य तत्र सदा स्थितिं सूचयन्वेश्मत्वमेव विशदयति—**दहर इति** ।
योग्यत्वात्तच्छब्देनोक्त्वा तदन्तराकाशस्य विचार्यतां ज्ञेयतां च दर्शयति—**तस्मिन्निति** । तस्मिन्निति सप्तम्या
राकाशमन्वेष्यं जिज्ञास्यं च किंवा तस्याः संनिहितनरदहराकाशार्थत्वात्तदन्तस्थं किंचिदन्विष्य ज्ञेयमिति संशयं

ण्डरीके दहर आकाशः श्रुतः स किं भूताकाशोऽथवा विज्ञानात्माऽथवा परमात्मेति संशय्यते। तः संशयः। आकाशब्रह्मपुरशब्दाभ्याम्। आकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च प्रयुज्यमानो दृश्यते। तत्र किं भूताकाश एव दहरः स्यात्किंवा पर इति संशयः। तथा ब्रह्मपुरमिति जीवोऽत्र ब्रह्मनामा तस्येदं पुरं शरीरं ब्रह्मपुरमथवा परस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति। तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामिनो दहराकाशत्वे संशयः। तत्राकाशशब्दस्य भूताकाशे ढत्वाद्भूताकाश एव दहरशब्द इति प्राप्तम्। तस्य च दहरायतनापेक्षया दहरत्वम्। 'यावान्वा यमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति च बाह्याभ्यन्तरभावकृतभेदस्योपमानोपमेयभावः ावापृथिव्यादि च तस्मिन्नन्तःसमाहितं, अवकाशात्मनाकाशस्यैकत्वात्। अथवा जीवो दहर ते प्राप्तम्, ब्रह्मपुरशब्दात्। जीवस्य हीदं पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते। तस्य स्वकर्मणोपार्जि-

रत्नप्रभाव्याख्या

संशयः कल्प्यः। तत्र यद्याकाशस्तदा संशयद्वयम्। तत्राकाशशब्दादेकं संशयमुक्त्वा ब्रह्मपरशब्दात्संशयान्तरमाह— ब्रह्मपुरमितीति। अत्र शब्दे। जीवस्य ब्रह्मणो वा पुरमिति संशयः। तत्र तस्मिन्संशये सतीति योजना। परब्दस्य ब्रह्मणि मुख्यत्वाद्ब्रह्म ध्येयमित्युक्तम्। तथेहाप्याकाशपदस्य भूताकाशे रूढत्वाद्भूताकाशो ध्येय इति दृष्टान्तेन यति—तत्राकाशेत्यादिना। दहरवाक्यस्यानन्तरप्रजापतिवाक्यस्य च सगुणे निर्गुणे च समन्वयोक्तेः श्रुत्यादिसं। पूर्वपक्षे भूताकाशाद्युपास्तिः, सिद्धान्ते सगुणब्रह्मोपास्त्या निर्गुणधीरिति फलभेदः। नच 'आकाशस्तल्लिङ्गात्' इत्य पुनरुक्तता शङ्कनीया। अत्र 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्याकाशान्तःस्थस्यान्वेष्टव्यत्वादिलिङ्गान्वयेन दहराकाशस्य स्पष्टलिङ्गाभावात्। ननु भूताकाशस्याल्पत्वं कथं, एकस्योपमानत्वमुपमेयत्वं च कथं, 'उभे अस्मिन् द्यावापृथिवी समाहिते उभावग्निश्च वायुश्च' इत्यादिना श्रुतसर्वाश्रयत्वं च कथमित्याशङ्क्य क्रमेण परिहरति—तस्येत्यादिना। क्षया अल्पत्वं, ध्यानार्थं कल्पितभेदात्सादृश्यं, स्वत एकत्वात्सर्वाश्रयत्वमित्यर्थः। ननु 'एष आत्मा' इत्यात्मशब्दो भूतं न

भामतीव्याख्या

—कुत इति। तद्धेतुमाह—आकाशब्रह्मपुरशब्दाभ्यामिति। तत्र प्रथमं तावद्भूताकाश एव दहर इति पूर्वपक्ष- ·तत्राकाशशब्दस्य भूताकाशे रूढत्वादिति। एष तु बहुतरोत्तरसंदर्भविरोधात्तुच्छः पूर्वपक्ष इत्यपरितोषेण पक्षान्तवते पूर्वपक्षी—अथवा जीवो दहर इति प्राप्तम्। युक्तमित्यर्थः। तत्र 'आधेयत्वाद्विशेषाच्च पुरं जीवस्य युज्यते। देहो न युक्तो हेतुद्वयवियोगतः॥' असाधारण्येन हि व्यपदेशा भवन्ति। तद्यथा क्षितिजलपवनबीजादिसामग्रीसमवधानजन्माप्यङ्कुरः जेन व्यपदिश्यते शाल्यङ्कुर इति। ननु क्षित्यादिभिः, तेषां कार्यान्तरेष्वपि साधारण्यात्। तदिह शरीरं ब्रह्मविकारोऽपि न व्यपदेष्टव्यम्, ब्रह्मणः सर्वविकारकारणत्वेनातिसाधारण्यात्। जीवभेदधर्माधर्मोपार्जितं तदित्यसाधारणकारणत्वाज्जीवेन व्यप- इति युक्तम्। अपिच ब्रह्मपुर इति सप्तम्यधिकरणे स्मर्यते, तेनाधेयेनानेन संबद्धव्यम्। नच ब्रह्मणः स्वे महिम्नि व्यवस्थि- धेयस्याधारसंबन्धः कल्पते। जीवस्त्वाराग्रमात्र इत्याधेयो भवति। तस्माद्ब्रह्मशब्दो रूढिं परित्यज्य देहादिबृंहणतया जीवे वा भाक्तो वा व्याख्येयः। चैतन्यं च भक्तिः। उपधानानुपधाने तु विशेषः। याच्यत्वं गम्यत्वम्। स्यादेतत्। जीवस्य पुरं

आनन्दगिरीयव्याख्या

त्यर्थः। यद्याकाशोऽन्विष्य ज्ञेयस्तदा प्राप्तं संशयमाह—स इति। द्वितीये संशये प्रश्नपूर्वकं हेतुमाह—कुत इति। द्वयोयोपनायकत्वं व्यावर्तयन्नाकाशशब्दाधीनं पक्षद्वयमाह—आकाशेति। शब्दान्तरात्पक्षद्वयप्राप्तिमाह—तथेति। इतिशब्दः देन संबध्यते। नन्वयमन्यः संशयो न प्रकृतस्तस्यान्याद्दृशत्वात्, तत्राह—तत्रेति। उक्ते संशये सतीति यावत्। परपुरुषब्रह्मणि मुख्यत्वाद्ब्रह्मैव ध्येयमित्युक्तम्। इहाप्याकाशशब्दस्य भूताकाशे रूढेस्तस्यैवोपास्यत्वमिति पूर्वपक्षमाह—तत्रेति। दहरसोपाधिके ब्रह्मण्यन्वयोक्तौ तत्र प्रवृत्तस्य निरुपाधिकं बुभुत्समानस्य तस्मिन्प्राजापत्यवाक्यान्वयोक्तेः संगतयः। पूर्वपक्षे भूतास्थानं, सिद्धान्ते परोपास्तिद्वारा प्रतिपत्तिरिति फलम्। नच 'आकाशस्तल्लिङ्गात्' इत्यनेन गतत्वात्पूर्वपक्षानुत्थानं, तत्र वाक्यज्ञानामाकाशविषयत्वात्। प्रकृते तेषां तदन्तस्थविषयत्वेन तदविषयत्वादिति। उपास्त्यर्थं ब्रह्मणो दहरत्वेऽपि भूताकाशस्य तदयत्वेन तदविषयत्वादिति। उपास्त्यर्थं ब्रह्मणो दहरत्वेऽपि भूताकाशस्य तदयोगात्कुतो ग्रहणं, तत्राह—तस्येति। तद्ध्यानेनापि स्वं फलं संपद्यते वाक्यादित्यर्थः। सति भेदे सादृश्ये चोपमानोपमेयभावोऽत्र तदसिद्धिरित्याशङ्क्याह—यावानिति। ब्रह्मणि ध्यादीनामन्तःसमाधानं, कारणत्वात्। तदभावान्नाकाशे नैवमित्याशङ्क्याह—द्यावापृथिव्यादीति। दहरे कथं तत्समाधानं, —अवकाशेति। अपहतपाप्मत्वादि यस्मिन्नित्यानुवादः। सत्यकामत्वादि ध्यानार्थमध्यस्तमिति भावः। एष आत्मेत्यात्मशब्दगामपक्षान्तरमाह—अथवेति। ब्रह्मशब्दस्यामुख्यत्वाज्जीवे तच्छब्दात्परस्मिन्नग्रहीति बुद्धिस्थे कुतो जीवोक्तिरित्याशङ्क्य पुरसंबन्धस्य त्वादित्याह—जीवस्येति। तस्यापि पुरेण कः संबन्धः, तत्राह—तस्येति। तथापि तस्मिन्नुपाधिकं कथं ब्रह्मपदं, तत्राह—

तत्वात् । भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वम् । न हि परस्य ब्रह्मणः शरीरेण स्वस्वामि-
बन्धोऽस्ति । तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टं यथा राज्ञः । मनउपाधिकश्च जीवः
प्रायेण हृदये प्रतिष्ठितमित्यतो जीवस्यैवेदं हृदयान्तरवस्थानं स्यात् । दहरत्वमपि तस्य
आरोपमितत्वादवकल्पते । आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति । न चात्र
काशस्यान्वेष्यत्वं विजिज्ञासितव्यत्वं च श्रूयते । 'तस्मिन्यदन्तः' इति परविशेषणत्वेनोपा-
अत उत्तरं ब्रूमः—परमेश्वर एव दहराकाशो भवितुमर्हति न भूताकाशो जीवो वा ।
उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः । तथाहि—अन्वेष्टव्यतयाभिहितस्य दहरस्याका-
चेद्ब्रूयुः' इत्युपक्रम्य 'किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्येवमाक्षेप-
समाधानवचनं भवति । 'स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे

---

रत्नप्रभाव्याख्या

युक्त इत्यरुचेराह—अथवेति । भक्त्येति । चैतन्यगुणयोगेनेत्यर्थः । मुख्यं ब्रह्म गृह्यतामित्यत आह—न
पुरस्वामी जीवः, हृदयस्थाकाशस्तु ब्रह्मेत्यत आह—तत्रेति । पुरस्वामिन एव तदन्तःस्थलसंभवान्नान्यो-
नोऽन्तःस्थलं कथमित्यत आह—मन इति । आकाशपदेन दहरमनुकृष्योक्तोपमादिकं ब्रह्माभेदविवक्षया
आकाशेति । ननु जीवस्याकाशपदार्थत्वमयुक्तमित्याशङ्क्य तर्हि भूताकाश एव दहरोऽस्तु तस्मिन्नन्तःस्थ-
पक्षान्तरमाह—न चात्रेति । परमन्तःस्थं वस्तु, तद्विशेषणत्वेनाधारत्वेन दहराकाशस्य तच्छब्देनोपादा-
अन्वेष्यत्वादिलिङ्गाद्दहरस्य ब्रह्मत्वनिश्चयात् 'आकाशस्तल्लिङ्गात्' इत्यनेन गतार्थत्वमिति शङ्कात्र निरस्ता
परविशेषणत्वेन ग्रहणाद्दहरस्य ब्रह्मत्वे लिङ्गं नास्तीत्यर्थः । अपहतपाप्मत्वादिलिङ्गोपेतात्मकश्रुत्या केवलाका-
न्तयति—परमेश्वर इत्यादिना । आकाशस्याक्षेपपूर्वकमिति संबन्धः । तमाचार्यं प्रति यदि ब्रूयुः,
तत्रत्याकाशोऽल्पतरः किं तदत्राल्पे विद्यते यद्विचार्य ज्ञेयमिति, तदा स आचार्यो ब्रूयादाकाशस्या-

भामतीव्याख्या

भवतु शरीरं, पुण्डरीकदहरगोचरता त्वन्यस्य भविष्यति, वत्सराजस्य पुर इवोज्जयिन्यां मैत्रस्य सद्मेत्यत आह—तत्र
इति । अयमर्थः—वेश्म खल्वधिकरणमनिर्दिष्टाधेयमाधेयविशेषापेक्षायां पुरस्वामिनः प्रकृतत्वात्तेनैवाधेयेन संबद्ध-
न्तरेण संबन्धं कल्पयति । ननु तथापि शरीरमेवास्य भोगायतनमिति को हृदयपुण्डरीकस्य विशेषो यत्तदेवास्य सद्मे-
उपाधिकश्च जीव इति । ननु मनोऽपि चलतया सकलदेहवृत्ति पर्यायेणेत्यत आह—मनश्च प्रायेणेति । आ-
दिना सामान्येन जीवे भाक्तः । अस्तु वा भूताकाश एवायमाकाशशब्दो 'दहरोऽस्मिन्नन्तराकाशः' इति, तथापि दो-
दहरस्याकाशस्यान्वेष्यत्वमिति । एवं प्राप्त उच्यते—भूताकाशस्य तावन्न दहरत्वं, 'यावान्वाऽयमा-
आकाशः' इत्युपमानविरोधात् । तथाहि—'तेन तस्योपमेयत्वं रामरावणयुद्धवत् । अगत्या भेदमारोप्य गतौ
अस्ति तु दहराकाशस्य ब्रह्मत्वेन भूताकाशाद्भेदेनोपमानस्य गतिः । न चानवच्छिन्नपरिमाणमवच्छिन्नं भवति ।
पपत्तेः । न भूताकाशमानत्वं ब्रह्मणोऽत्र विधीयते, येन 'ज्यायानाकाशात्' इति श्रुतिविरोधः स्यात्, अपि तु

आनन्दगिरीयव्याख्या

भक्त्येति । चैतन्यगुणयोगेनेत्यर्थः । गौणमुख्ययोर्मुख्ये संप्रत्ययमाशङ्क्योक्तम्—न हीति । कार्यकारणसंबन्ध-
प्येन व्यपदेशाज्जीवकर्मार्जितं शरीरं तेनैव व्यपदेश्यमित्यर्थः । तस्य जीवपुरत्वेऽपि राजपुरे मैत्रसद्मवत्पुण्डरीकदहरं
तत्राह—तत्रेति । वेश्मनः खल्वाधारस्याधेयापेक्षायां पुरस्वामिना ध्येयेन संबन्धान्नान्यापेक्षेत्यर्थः । जीवस्य देहं
हृदयेन तदभावात्कथं तस्यैव तद्वेश्मता, तत्राह—मन इति । तस्यापि चञ्चलत्वान्न हृदयेनासाधारण्यं, तत्राह—
तस्य सर्वगतस्य कुतो दहरत्वं, तत्राह—दहरत्वमिति । दहरत्वादेव तर्हि नाकाशोपमितत्वादीत्याशङ्क्याह—आका-
मपेक्ष्यैतत्कल्प्यते तदेव ब्रह्माकाशशब्दं लाघवादित्याशङ्क्याद्ये संशये पूर्वपक्षमाह—नचेति । परविशेषणत्वेनेत्यत्र
दानात्तस्मिन्निति सप्तम्यन्ततच्छब्दस्येति शेषः । यद्वा परशब्दोऽन्तस्थवस्तुविषयस्तद्विशेषणत्वेन तस्मिन्निति दहर-
तच्छब्दस्य संनिकृष्टान्वययोगे विप्रकृष्टान्वयस्य जघन्यत्वादाकाशान्तर्गतं ध्येयमिति भावः । भूताकाशस्य
काशान्तस्थस्य वा ध्यानार्थं दहरवाक्यमुपसंहर्तुमितिशब्दः । सिद्धान्तयति—अत इति । तत्र प्रतिज्ञां व्याचष्टे—
प्रतिज्ञायां प्रश्नद्वारा हेतूनाह—कस्मादिति । तानेव विवृणोति—तथाहीति । विहितस्य । तदन्वेष्टव्यमित्यादिनेति
पपूर्वकमिति संबन्धः । तमाचार्यं प्रति शिष्या यदि ब्रूयुरित्याक्षेपमुपक्रम्यावतार्येति योजना । आक्षेपप्रकारमाह—किं
रीकमेव तावदल्पमल्पतरं च तदन्तर्गतमाकाशं तथा च किं तदत्राल्पेऽस्ति यच्छ्रुतियुक्तिभ्यामन्वेष्यं यद्वाव
दहरस्य ज्ञेयत्वमाक्षिप्य समाहितमित्यर्थः । तदेव दर्शयति—स इति । आचार्यः सर्वनामार्थः । अग्निरिति

पृथिवी अन्तरेव समाहिते' (छा०८।१।३) इत्यादि । तत्र पुण्डरीकदहरत्वेन प्राप्तदहरत्वस्याका-स्य प्रसिद्धाकाशौपम्येन दहरत्वं निवर्तयन्भूताकाशत्वं दहरस्याकाशस्य निवर्तयतीति गम्यते । द्यप्याकाशशब्दो भूताकाशे रूढस्तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निव-र्तिता भवति । नन्वेकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेनोपमानोपमेयभावः संभव-त्युक्तम् । नैवं संभवति । अगतिका हीयं गतिः, यत्काल्पनिकभेदाश्रयणम् । अपिच कल्पयित्वा दमुपमानोपमेयभावं वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाशपरिमाणत्वमुप-द्येत । ननु परमेश्वरस्यापि 'ज्यायानाकाशात्' (शत० ब्रा० १०।६।३।२) इति श्रुत्यन्तराद्वैवा-काशपरिमाणत्वमुपपद्यते । नैष दोषः । पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य न वत्त्वप्रतिपादनपरत्वम् । उभयप्रतिपादने हि वाक्यं भिद्येत । नच कल्पितभेदे पुण्डरीकवे-ष्टत आकाशैकदेशे द्यावापृथिव्यादीनामन्तःसमाधानमुपपद्यते । 'एष आत्मापहतपाप्मा विजरो मृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इति चात्मत्वापहतपाप्मत्वा-यश्च गुणा न भूताकाशे संभवन्ति । यद्यप्यात्मशब्दो जीवे संभवति तथापीतरेभ्यः कारणे-

---

रत्नप्रभाव्याख्या

स्य तात्पर्यमाह—**तत्रेति** । निवर्तयति । आचार्य इति शेषः । नन्वाकाशशब्देन रूढ्या भूताकाशस्य भानात्कथं तन्नि-त्याशङ्क्याह—**यद्यपीति** । ननु 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यभेदेऽप्युपमा दृष्टेतिचेत्, न, अभेदे सादृश्यस्या-न युद्धस्य निरुपमत्वे तात्पर्यादयमनन्वयालंकार इति काव्यविदः । पूर्वोक्तमनूद्य निरस्यति—**नन्वित्यादिना** । श्लिष्ट इवाभाति कोदण्डप्रभया युतः' इत्यादौ प्रभायोगसीताश्लेषरूपविशेषणभेदाद्भेदाश्रयणमेकस्यैव श्रीरामस्योपमानोप-प्रसिद्धधर्ममगत्या कृतमित्यनुदाहरणं द्रष्टव्यम् । नैवमत्राश्रयणं युक्तम् । वाक्यस्याल्पत्वनिवृत्तिपरत्वेन गतिसद्भावात् । हार्दाकाशस्यान्तरत्वात्यागे अल्पत्वेन व्यापकबाह्याकाशसादृश्यं न युक्तमित्याह—**अपिचेति** । आन्तरत्वत्यागे तु अत्य-न्त सादृश्यमिति भावः । ननु हार्दाकाशस्याल्पत्वनिवृत्तौ तावत्त्वे च तात्पर्यं किं न स्यादित्यत आह—**उभयेति** । ल्पत्वनिवृत्तावेव तात्पर्यमिति भावः । एवमाकाशोपमितत्वाद्दहराकाशो न भूतमित्युक्तम् । सर्वाश्रयत्वादिलिङ्गेभ्यश्च ह—**नचेत्यादिना** । विगता जिघत्सा जग्धुमिच्छा यस्य सोऽयं विजिघत्सः । बुभुक्षाशून्य इत्यर्थः । प्रथमश्रुत-

भामतीव्याख्या

कोपाधिप्राप्तं दहरत्वं निवर्त्यते । अपिच सर्व एवोत्तरे हेतवो दहराकाशस्य भूताकाशत्वं व्यासेधन्तीत्याह—**नच कल्पित-** ति । नापि दहराकाशो जीव इत्याह—**यद्यप्यात्मशब्द इति** । 'उपलब्धेरधिष्ठानं ब्रह्मणो देह इष्यते । तेनासाधारण-त्वेन देहो ब्रह्मपुरं भवेत् ॥' देहे हि ब्रह्मोपलभ्यत इत्यसाधारणतया देहो ब्रह्मपुरमिति व्यपदिश्यते, न तु ब्रह्मविकारतया । तथाच र्थो मुख्यो भवति । अस्तु वा ब्रह्मपुरं जीवपुरं, तथापि यथा वत्सराजस्य पुरे उज्जयिन्यां मैत्रस्य सद्म भवति, एवं जीवस्य पुण्डरीकं ब्रह्मसदनं भविष्यति, उत्तरेभ्यो ब्रह्मलिङ्गेभ्यो ब्रह्मणोऽवधारणात् । ब्रह्मणो हि बाधके प्रमाणे बलीयसि जीवस्य च प्रमाणे सति ब्रह्मलिङ्गानि कथंचिदभेदविवक्षया जीवे व्याख्यायन्ते । न चेह ब्रह्मणो बाधकं प्रमाणं, साधकं वास्ति जीवस्य । पदेशश्चोपपादितो ब्रह्मोपलब्धिस्थानतया । अर्भकौकस्त्वं चोक्तम् । तस्मात् सति संभवे ब्रह्मणि, तल्लिङ्गानां नाब्रह्मणि नमुचितमिति ब्रह्मैव दहराकाशो न जीवभूताकाशाविति । श्रवणमननमनुविधाय ब्रह्मानुभूय चरणं चारस्तेषां कामेषु चरणं

आनन्दगिरीयव्याख्या

युश्च' इत्यादिसंग्रहार्थमादिपदम् । तस्य विवक्षितमर्थमाह—**तत्रेति** । निवर्तयन्नित्याचार्यो गृह्यते । आकाशशब्दस्य भूताकाशे स्यानुपपत्त्या तन्निवर्तनं, तत्राह—**यद्यपीति** । परोक्तिं स्मारयित्वा निरस्यति—**नन्वित्यादिना** । गत्यन्तराभावादारोपितभेदे-स्य काचित्कल्पनेऽपि सत्यां गतौ तदसिद्धिरित्यर्थः । सादृश्ये सत्युपमानोपमेयत्वं दृष्टम् । नचोपाधिपरिच्छिन्नान्तराकाशस्य णेन बाह्याकाशेन सादृश्यमित्याह—**अपि चेति** । तर्हि परस्यापि भूताकाशो नोपमानमतुल्यपरिमाणत्वादित्याह—**नन्विति** । भूताकाशतुल्यत्वविषयं किंतु शङ्कितात्पत्वव्यावृत्तिपरमित्याह—**नेति** । निवृत्तौ तावत्त्वे च वाक्यतात्पर्यमाशङ्क्योक्तम्— । नच संभवत्येकवाक्यत्वे वाक्यभेदः । नच तावत्त्वमेव प्रतिपाद्यं, अफलत्वात् । नच शङ्कितदहरत्वनिवृत्तिरेव फलं, तत्रैव वाक्यता-त् । नच साक्षादेव तस्मिन्नाकाशार्थिकत्वकल्पना युक्तेति भावः । भूताकाशाग्रहे लिङ्गान्तरमाह—**नचेति** । तत्रैव हेत्वन्तरम्— । विगता जिघत्सा खादितुमिच्छा यस्य स तथा । चकारादुक्तं सर्वमाकाशस्यैकदेशे नोपपद्यत इति संबन्धः । तदेव स्पष्टयति— ति । न तावद्भूताकाशे संभवत्यात्मत्वं, अचेतनत्वात् । नचापहतपाप्मत्वादेर्नित्यानुवादत्वम् । नापि सत्यकामत्वादेरारोपितत्वम् । हीयं गतिः । उपक्रमस्थाकाशश्रुतेश्चोपसंहारस्थात्मश्रुतिरुक्तलिङ्गसंगता बलीयसी, प्रत्ययसंवादादित्याकाशशब्दं ब्रह्मेति भावः । मितत्वादिहेतुभ्यो भूताकाशं निरस्य तद्बलादेव जीवमपि निरस्यति—**यद्यपीति** । ननु कथमाकाशोपमितत्वं जीवशङ्कानिवर्तकं,

भ्यो जीवाशङ्कापि निवर्तिता भवति । न ह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्य जीवस्य
कवेष्टनकृतं दहरत्वं शक्यं निवर्तयितुम् । ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि
चेत् । यदात्मतया जीवस्य सर्वगतत्वादि विवक्ष्येत तस्यैव ब्रह्मणः साक्षात्सर्वगतत्वादि
तामिति युक्तम् । यदप्युक्तं ब्रह्मपुरमिति जीवेन पुरस्योपलक्षितत्वाद्राज्ञ इव जीवस्यै
मिनः पुरैकदेशवर्तित्वमस्त्विति । अत्र ब्रूमः—परस्यैवेदं ब्रह्मणः पुरं सच्छरीरं
च्यते, ब्रह्मशब्दस्य तस्मिन्मुख्यत्वात् । तस्याप्यस्ति पुरेणानेन संबन्धः, उपलब्ध्यधि
'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (प्र० ५।५) 'स वा अयं पुरुषः
पूर्षु पुरिशयः' (बृ० २।५।१८) इत्यादिश्रुतिभ्यः । अथवा जीवपुर एवास्मिन्ब्रह्म सं
लक्ष्यते । यथा शालग्रामे विष्णुः संनिहित इति तद्वत् । 'तद्यथेह कर्मचितो लोकः
मेवामुत्र पुण्यचितो लोकः क्षीयते' (छा० ८।१।६) इति च कर्मणामन्तवत्फलत्वमुक्त्वा
इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति
हराकाशविज्ञानस्यानन्तफलत्वं वदन्परमात्मत्वमस्य सूचयति । यदप्येतदुक्तं, न दह
स्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रुतं, परविशेषणत्वेनोपादानादिति । अत्र ब्रूमः—
नान्वेष्टव्यत्वेनोक्तः स्यात् 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इ
स्वरूपप्रदर्शनं नोपयुज्येत । नन्वेतदप्यन्तर्वर्तिवस्तुसद्भावदर्शनायैव प्रदर्श्यते । 'तं चे

---

रत्नप्रभाव्याख्या

ब्रह्मशब्देन तत्सापेक्षचरमश्रुतषष्ठीविभक्त्यर्थः संबन्धो नेयः, न तु ब्रह्मणः पुरमिति षष्ठ्यर्थः स्वस्वामिभावे
क्षेण तत्सापेक्षं बाध्यम्' इति न्यायादित्याह—**अत्र ब्रूम इति** । शरीरस्य ब्रह्मणा तदुपलब्धिस्थानत्वं
माह—**स इति** । पूर्षु शरीरेषु, पुरि हृदये शय इति पुरुष इत्यन्वयः । ननु ब्रह्मशब्दस्य जीवेऽप्यर्थ
मुख्यत्वान्न षष्ठ्यर्थः कथंचिन्नेय इत्यत आह—**अथवेति** । बृंहयति देहमिति ब्रह्म जीवः तत्स्वामिके पुरे
भवतु, राजपुरे मैत्रसद्मवदित्यर्थः । अनन्तफललिङ्गादपि दहरः परमात्मेत्याह—**तद्यथेति** । अथ कर्म
जीवदशायामात्मानं दहरं तदाश्रितांश्च सत्यकामादिगुणान् आचार्योपदेशमनुविद्य ध्यानेनानुभूय ये पर
सर्वलोकेष्वनन्तमैश्वर्यं स्वेच्छया संचलनादिकं भवतीत्यर्थः । दहरे उक्तलिङ्गान्यन्यथासिद्धानि तेषां त
स्मारयित्वा दूषयति—**यदपीत्यादिना** । उत्तरत्राकाशस्वरूपप्रतिपादनान्यथानुपपत्त्या पूर्वं तस्यान्वेष्य
पपत्तिं शङ्कते—**नन्विति** । एतत् आकाशस्वरूपम् । आक्षेपबीजमाकाशस्याल्पत्वमुपमया निरस्यान्तःस्थव

भामतीव्याख्या

भवतीत्यर्थः । स्यादेतत् । दहराकाशस्यान्वेष्यत्वे सिद्धे तत्र विचारो युज्यते, ननु तदन्वेष्टव्यम्, अपितु त
स्युक्तमित्यनुभाषते—**यदप्येतदिति** । अनुभाषितं दूषयति—**अत्र ब्रूम इति** । यद्याकाशाधारमन्यद
व्युत्पादनीयं, आकाशव्युत्पादनं तु क्वोपयुज्यत इत्यर्थः । चोदयति—**नन्वेतदपीति** । आकाशकथनमपि त

आनन्दगिरीयव्याख्या

तस्यापि तदुपमितत्वेन शङ्कितदहरत्वनिवृत्त्योपमानपर्यवसानात्, तत्राह—**न हीति** । तादात्म्येन शङ्कते—**ब्रह्मेति**
धारत्वादिसंग्रहार्थम् । लाघवेन प्रत्याह—**यदिति** । ब्रह्मपुरशब्दाज्जीवोपादानमुक्तमनुवदति—**यदपीति** । प्रथम
श्रुतविभक्त्यर्थो नेतव्य इत्याह—**अत्रेति** । ब्रह्मणः पुरमित्यत्र स्वस्वामित्वं षष्ठ्यर्थं हित्वा ब्रह्मशब्दो मुख्यार्थः
प्रकृत्यर्थापेक्षस्य दौर्बल्यादित्यर्थः । ननु ब्रह्मपक्षे प्रत्ययस्य निरालम्बनत्वमेव । जीवपक्षे प्रकृत्यालम्बनं कथंचिदस्ति,
तत्राह—**तस्येति** । ब्रह्मणः शरीरमुपलब्ध्यधिष्ठानमित्यत्र मानमाह—**स इति** । सर्वासु पूर्ष्विति व्यपदिश्य
हृदयसंबन्धविवक्षया नेयम् । आदिपदं 'यो वेद निहितं गुहायाम्' इत्यादिसंग्रहार्थम् । ननु शारीरः शरीरमत्र
तस्मिन्मुख्यं ब्रह्मत्वं, तस्य च स्वकर्मार्जितत्वादसाधारणं शरीरं, तथाच प्रकृतिप्रत्ययौ जीवे मुख्याविति, तत्राह—
संबद्धमेव वेश्मोत्तरहेतुभ्यो ब्रह्मणापि संबध्यते । दृष्टं हि राजपुरे मैत्रसद्मेत्यर्थः । किंच कर्मफलनित्यत्व
फलत्वश्रुतेर्दहरस्य परत्वमित्याह—**तद्यथेति** । कर्मणस्तत्फलाद्योपेक्षानन्तर्यमथशब्दार्थः । इह जीवत्येव देहे दहर
सत्यकामादिगुणानाचार्योपदेशमनुविद्यानुभूय ये परलोकं व्रजन्ति तेषां सर्वेषु लोकेषु कामचारः स्वेच्छया
मित्यर्थः । श्रुतितात्पर्यमाह—**प्रकृतेति** । वदन्नित्याचार्यो वेदो वोक्तः । दहराकाशस्यान्वेष्यत्वादिसिद्धौ त
'तस्मिन्यदन्तः' इत्यन्तःस्थविशेषणत्वादन्वेषणादेरिति, तत्राह—**यदपीति** । उत्तरआकाशस्वरूपप्रतिपादनानुपपत्त्या
समाहितः संदष्टमित्याह—**अत्रेति** । तत्प्रतिपादनमन्यथोपपन्नमिति शङ्कते—**नन्विति** । कथमेतदवगम्यते,

त्वयं विभागः परमार्थतोऽस्ति यस्मात्तयोः कार्यकारणयोरनन्यत्वमवगम्यते । कार्यमाकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म, तस्मात्कारणात्परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्याव-गम्यते । कुतः । आरम्भणशब्दस्तावदेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते— 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा० ६।१।४) इति । एतदुक्तं भवति—एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावोदञ्चनादिकं मृदात्मकत्वाविशेषाद्विज्ञातं भवेत् । यतो वाचारम्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते । विकारो घटः शराव उदञ्चनं चेति । न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । नामधेयमात्रं ह्येतदनृतं मृत्तिकेत्येव सत्यमिति । एष ब्रह्मणो दृष्टान्त आम्नातः । तत्र श्रुताद्वाचारम्भणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते । पुनश्च तेजोबन्नानां ब्रह्मकार्यतामुक्त्वा तेजोबन्नकार्याणां तेजोबन्नव्यतिरेकेणाभावं ब्रवीति—'अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' (छा० ६।४।१) इत्यादिना । आरम्भणशब्दादिभ्य इत्यादिशब्दात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' (छा० ६।८।७), 'इदं सर्वं यदयमात्मा' (बृ० २।४।६), 'ब्रह्मैवेदं सर्वम्' (मु० २।२।

---

रत्नप्रभाव्याख्या

...सर्गिकप्रामाण्यमङ्गीकृत्य स्थूलबुद्धिसमाधानार्थं परिणामदृष्टान्तेन भेदाभेदावुक्तौ, संप्रत्यङ्गीकृतप्रामाण्यं तत्त्वावेदकत्वात्प्र-...च्य व्यावहारिकत्वे स्थाप्यते, तथाच मिथ्याद्वैतग्राहिप्रमाणैरद्वैतश्रुतेर्न बाधः, एकस्यां रज्ज्वां दण्डस्रगादिद्वैतदर्शनादित्ययं मुख्यः ...हार इति भावः । एवमद्वैतसमन्वयस्याविरोधार्थं द्वैतस्य मिथ्यात्वं साधयति—यस्मात्तयोरिति । स्वरूपैक्यं कार्यकारण-...पात इत्यत आह—व्यतिरेकेणेति । कारणात्पृथक्सत्त्वशून्यत्वं कार्यस्य साध्यते नैक्यमित्यर्थः । वागारभ्यं नाममात्रं ...रो न कारणात्पृथगस्तीत्येवकारार्थं इति श्रुतिं योजयति—एतदुक्तमिति । आरम्भणशब्दार्थान्तरमाह—पुनश्चेति । ...दग्नित्वमपगतं कारणमात्रत्वात् । त्रीणि तेजोबन्नानां रूपाणि रूपतन्मात्रात्मकानि सत्यम् । तेषामपि सन्मा-

भामतीव्याख्या

...नात् परमार्थभूतादनन्यत्वमाकाशादेः प्रपञ्चस्य कार्यस्य कुतस्तर्हि न वैशेषिकाद्युक्तदोषप्रपञ्चावतार इत्यत आह—व्यतिरेके-...णाभावः कार्यस्यावगम्यत इति । न खल्वनन्यत्वमित्यभेदं ब्रूमः, किंतु भेदं व्यासेधामः, ततश्च नाभेदाश्रयदोषप्रसङ्गः । ...भेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति । भेदनिषेधहेतुं व्याचष्टे—आरम्भणशब्दस्तावदिति । ...हि ब्रह्मविज्ञानेन सर्वं जगत्तत्त्वतो ज्ञायेत यदि ब्रह्मैव तत्त्वं जगतो भवेत् । यथा रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति । ...हि तस्य तत्त्वम् । तत्त्वज्ञानं च ज्ञानमतोऽन्यन्मिथ्याज्ञानमज्ञानमेव । अत्रैव वैदिको दृष्टान्तः—यथा सोम्यैकेन मृत्पिण्डे-...न । स्यादेतत् । मृदि ज्ञातायां कथं मृन्मयं घटादि ज्ञातं भवति । नहि तन्मृदात्मकमित्युपपादितमधस्तात् । ...तत्त्वतो भिन्नम् । न चान्यस्मिन्विज्ञातेऽन्यद्विज्ञातं भवतीत्यत आह श्रुतिः—'वाचारम्भणं विकारो नामधेयम्' । वाचया

आनन्दगिरीयव्याख्या

...ः समाहितः । संप्रति स्वीकृतं प्रामाण्यं तत्त्वावेदकत्वात्प्रच्याव्य व्यावहारिकत्वे व्यवस्थाप्यते । तथाच विषयभेदादपौनरुक्त्यम् । ...दे तु पूर्ववदिति भावः । यथोक्तविभागस्य वस्तुतोऽसत्त्वे हेतुत्वेन तदनन्यत्वमिति सूत्रावयवं विभजते—यस्मादिति । कार्ये ...पत्तिनिरासार्थं विशिनष्टि—कार्यमिति । कारणेऽपि विप्रतिपत्तिं निराकर्तुं विशेषमादत्ते—कारणमिति । कार्यकारणयोरनन्य-...त्वे मिथोऽनन्यत्वं शङ्कितं व्यावर्तयति—तस्मादिति । ननु कार्यप्रपञ्चस्य भेदाभेदाभ्यामनिर्वाच्यतामिच्छन्कारणात्परमार्थतो-...ऽयं व्याचक्षाणः स्वोक्तिविरोधं कथं नाधिगच्छति, तत्राह—व्यतिरेकेणेति । यस्मादेवमवगम्यते तस्मात्परमार्थतो विभागो ...न द्वैतादि मानं व्यावहारिकमानत्वात्तात्त्विकमानस्य समन्वयस्याविरोधीत्यर्थः । कार्यस्य कारणातिरेकेणाभावे हेतुं पृच्छति—कुत इति । ...भेदनिषेधं सूत्रभागमवतारयति—आरम्भणेति । तत्र भेदनिषेधहेतुमारम्भणशब्दं व्याकरोति—आरम्भणशब्दस्तावदिति । ...विषयादेष शब्दो जगद्विषयो न भवति, तत्कथं जगतो मिथ्यात्वं तेन सिध्यतीत्याशङ्क्य जगतो मिथ्यात्वसाधनार्थमादिष्टदृष्टान्तनि-...रम्भणत्वं दार्ष्टान्तिकेऽपि साम्यार्थमास्थेयमित्यभिप्रेत्याह—एतदुक्तमिति । परमार्थतो विज्ञातमिति संबन्धः । कथमन्यस्मि-...न्नन्यद्विज्ञातं स्यादित्याशङ्क्याह—यत इति । कारणमपि विकारवदनृतमेव शब्दमात्रत्वाविशेषादित्याशङ्क्याह—मृत्तिकेति । ...इतिशब्दः संबध्यते । तथापि ब्रह्मणि किमायातं, तत्राह—एष इति । दृष्टान्तस्य कारणातिरिक्तकार्याभावविषयत्वेऽपि दार्ष्टान्ति-...केऽपि कथमित्याशङ्क्य फलितमाह—तत्रेति । संनिहितो दृष्टान्तः सप्तम्यर्थः । प्रकारान्तरेणारम्भणशब्दं व्याचष्टे—पुनश्चेति । दृष्टान्त-...भेदे ब्रह्मातिरेकिकार्याभावप्रतिपत्त्यनन्तरं चेत्यर्थः । ब्रह्मकार्याणां मिथ्यात्वं तत्कार्याणां मिथ्यात्वोक्त्यापि दर्शितमिति भावः । ...पदं व्याख्याति—आरम्भणेति । एवमादीत्यादिशब्दात् 'तदात्मानं स्वयमकुरुत' इत्यादि गृहीतम् । एकविज्ञानेन सर्वविज्ञा-

११), 'आत्मैवेदं सर्वम्' (छा० ७।२५।२), 'नेह नानास्ति किंचन' (बृ० ४।४।१९) इ-
त्यात्मैकत्वप्रतिपादनपरं वचनजातमुदाहर्तव्यम् । न चान्यथैकविज्ञानेन सर्वविज्ञानं सं-
तस्माद्यथा घटकरकाद्याकाशानां महाकाशानन्यत्वं, यथा च मृगतृष्णिकोदकादीनामूषरा-
दिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्स्वरूपेणानुपाख्यत्वात्, एवमस्य भोग्यभोक्त्रादिप्रपञ्च-
ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम् । नन्वनेकात्मकं ब्रह्म, यथा वृक्षोऽनेकशाख एवमनेकश-
क्तियुक्तं ब्रह्म । अत एकत्वं नानात्वं चोभयमपि सत्यमेव । यथा वृक्ष इत्येकत्वं शाखा इति
त्वम् । यथा च समुद्रात्मनैकत्वं फेनतरङ्गाद्यात्मना नानात्वम् । यथा च मृदात्मनैकत्वं घ-

---

रत्नप्रभाव्याख्या

त्रत्वात्सदेव शिष्यत इत्यभिप्रायः । जीवजगतोर्ब्रह्मान्यत्वे प्रतिज्ञाबाध इत्याह—न चान्यथेति । तयोरन्य-
दृष्टान्तावाह—तस्माद्यथेति । प्रतिज्ञाबलादित्यर्थः । दृष्टं प्रातीतिकं नष्टमनित्यं यत्स्वरूपं तद्रूपेणानुपाख्य-
शून्यत्वादनन्यत्वमिति संबन्धः । शुद्धाद्वैतं स्वमतमुक्त्वा भेदाभेदमतमुत्थापयति—नन्विति । अनेकाभिः श-
नप्रकृतिभिः परिणामैर्युक्तमित्यर्थः । भेदाभेदमते सर्वव्यवस्थासिद्धिरत्यन्ताभेदे द्वैतमानबाध इत्यभिमन्य-

भामतीव्याख्या

केवलमारभ्यते विकारजातं, न तु तत्त्वतोऽस्ति, यतो नामधेयमात्रमेतत् । यथा पुरुषस्य चैतन्यमिति
विकल्पमात्रम् । यथाहुर्विकल्पविदः—'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति । तथा चावस्तुतया
मृत्तिकेत्येव सत्यम् । तस्माद्घटशरावोदञ्चनादीनां तत्त्वं मृदेव, तेन मृदि ज्ञातायां तेषां सर्वेषामेव तत्त्वं
तदिदमुक्तम्—न चान्यथैकविज्ञानेन सर्वविज्ञानं संपद्यत इति । निदर्शनान्तरद्वयं दर्शयन्नुपसंहरति—
घटकरकाद्याकाशानामिति । ये हि दृष्टनष्टस्वरूपा न ते वस्तुसन्तो यथा मृगतृष्णिकोदकादयः, तथा च इदं
तस्मादवस्तु सत् । तथाहि यदस्ति तदस्त्येव, यथा चिदात्मा । नह्यसौ कदाचित् क्वचित् कथंचिद्वास्ति । किंतु सर्वदा सर्वत्र
न नास्ति । न चैवं विकारजातं, तस्य कदाचित् कथंचित् कुत्रचिदवस्थानात् । तथाहि—सत्स्वभावं चेद्विकारजातं,
दसत् । असत्स्वभावं चेत्, कथं कदाचित् सत् । सदसतोरेकत्वविरोधात् । नहि रूपं कदाचित् क्वचित् कथंचिद्वा
तस्य सदसत्त्वे धर्मौ, ते च स्वकारणाधीनजन्मतया कदाचिदेव भवतः, तर्हि विकारजातं दण्डायमानं सदा
कस्यचित् । अथासत्त्वसमये तन्नास्ति, कस्य तर्हि धर्मोऽसत्त्वम् । नहि धर्मिण्यप्रत्युत्पन्ने तद्धर्मोऽसत्त्वं प्रत्युत्पन्न
धर्मः किंत्वर्थान्तरमसत्त्वम् । किमायातं भावस्य । नहि घटे जाते पटस्य किंचिद्भवति । असत्त्वं भावविरोधीति चेत्,
त्करस्य तत्त्वानुपपत्तेः । किंचित्करत्वे वा तत्राप्यसत्त्वेन तदनुयोगसंभवात् । अथास्यासत्त्वं नाम किंचिन्न जायते,
भवति । यथाहुः—'न तस्य किंचिद्भवति न भवत्येव केवलम्' इति । अथैष प्रसज्यप्रतिषेधो निरुच्यतां, किं
उत भावस्वभावः स इति । तत्र पूर्वस्मिन् कल्पे भावानां तत्स्वभावतया तुच्छतया जगच्छून्यं प्रसज्येत । तथा च
भावः । उत्तरस्मिंस्तु सर्वभावनित्यतया नाभावव्यवहारः स्यात् । कल्पनामात्रनिमित्तत्वेऽपि निषेधस्य भाव
तस्माद्भिन्नमस्ति कारणाद्विकारजातं न वस्तु सत् । अतो विकारजातमनिर्वचनीयमनृतम् । तदनेन प्रमाणेन सिद्ध
जातस्य कारणस्य निर्वाच्यतया सत्त्वं 'मृत्तिकेत्येव सत्यम्' इत्यादिना प्रबन्धेन दृष्टान्ततयानुवदति श्रुतिः ।
काणां बुद्धिसाम्यं स दृष्टान्तः' इति चाक्षपादसूत्रं प्रमाणसिद्धो दृष्टान्त इत्येतत्परं, न पुनर्लौकिकसिद्धत्वमत्र
तेषां परमाण्वादिर्न दृष्टान्तः स्यात् । नहि परमाण्वादिर्नैसर्गिकवैनयिकबुद्ध्यतिशयरहितानां लौकिकानां सिद्धः
न्तवादिनमुत्थापयति—नन्वनेकात्मकमिति । अनेकाभिः शक्तिभिर्याः प्रवृत्तयो नानाकार्यसृष्टयस्तद्युक्तं

आनन्दगिरीयव्याख्या

नप्रतिज्ञानुपपत्तिरपि भेदाभावे मानतया सौत्रेणादिशब्देन गृहीतेत्याह—न चेति । यदि जगतो ब्रह्मैव तत्त्वं
ज्ञायेत, यथा रज्जुतत्त्वज्ञानेन भुजंगादितत्त्वम् । तत्त्वज्ञानमेव न ज्ञानं ततोऽन्यस्य मिथ्याज्ञानत्वेनाज्ञानत्वादिति
संहरति—तस्मादिति । जीवप्रपञ्चयोर्ब्रह्मणोऽनन्यत्वे क्रमेण दृष्टान्तद्वयम् । तेषामूषरादिभ्योऽनन्यत्वे हेतुमाह—
पुनर्नष्टम् । अनित्यमिति यावत् । तत्स्वभावत्वान्मृगतृष्णिकोदकादीनामूषरादिभ्यो भेदेन नास्तित्वम् । विमतमधि-
ष्ठानावधित्वात्, चिदात्मवदिति व्यतिरेकानुमानादित्यर्थः । दृष्टमर्पणमन्वितं प्रतीतिकालेऽपि सत्ताराहित्यं तत्रैव
एकत्वैकान्ताभ्युपगमे द्वैतग्राहिप्रत्यक्षादिविरोधान्नाद्वितीये ब्रह्मणि समन्वयसिद्धिरिति पूर्वपक्षयन्ननेकान्तवादमुत्थाप-
स्यानेकात्मकत्वं विप्रतिषिद्धमित्याशङ्क्याह—यथेति । अनेकाभिः शक्तिभिश्चिद्रूपाभिस्तदधीनप्रवृत्तिभिश्च युक्तमिति
त्मकत्वे संभाविते फलितमाह—अत इति । उभयसत्यत्वमपि वृक्षदृष्टान्ते दृष्टमित्याह—यथेति । प्रतिपादिता-
यथा चेति । अंशांशिभावेन जीवब्रह्मणोर्भिन्नाभिन्नत्वे दृष्टान्तावुक्त्वा कार्यकारणात्मना जगद्ब्रह्मणोस्तथात्वे

वाद्यात्मना नानात्वम् । तत्रैकत्वांशेन ज्ञानान्मोक्षव्यवहारः सेत्स्यति । नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति । एवं च मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति । नैवं स्यात् । 'मृत्तिकेत्येव सत्यम्' इति प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात् । वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात् । दार्ष्टान्तिकेऽपि 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति च परमकारणस्यैवैकस्य सत्यत्वावधारणात् । 'स आत्मा तत्त्वमसि श्वेतकेतो' इति च शारीरस्य ब्रह्मभावोपदेशात् । स्वयं प्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते न यत्नान्तरप्रसाध्यम् । अतश्चेदं शास्त्रीयं ब्रह्मात्मत्वमवगम्यमानं स्वाभाविकस्य शारीरात्मत्वस्य बाधकं संपद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम् । बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मणः कल्प्येत । दर्शयति च—'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।५।१५) इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति सम-

रत्नप्रभाव्याख्या

स्यादिति । एवकारवाचारम्भणशब्दाभ्यां विकारसत्त्वनिषेधात्परिणामवादः श्रुतिबाह्य इत्यर्थः । किंच संसारस्य सत्यत्वे …विरुद्धस्य जीवस्य ब्रह्मैक्योपदेशो न स्याद्विरोधादित्याह—स आत्मेति । एकत्वं ज्ञानकर्मसमुच्चयसाध्यमित्युपदेशार्थमि…ब्रह्म असीतिपदविरोधान्नैवमित्याह—स्वयमिति । अतस्तत्त्वज्ञानबाध्यत्वात्संसारित्वं मिथ्येत्याह—अतश्चेति । स्वतः…उपदेशादित्यर्थः । यदुक्तं व्यवहारार्थं नानात्वं सत्यमिति, तत्किं ज्ञानादूर्ध्वं व्यवहारार्थं प्राग्वा । नाद्य इत्याह—बाधिते …। स्वभावोऽत्राविद्या तया कृतः स्वाभाविकः । ज्ञानादूर्ध्वं प्रमातृत्वादिव्यवहारस्याभावान्नानात्वं न कल्प्यमित्यर्थः । न द्वि… ज्ञानात्प्राक्कल्पितनानात्वेन व्यवहारोपपत्तौ नानात्वस्य सत्यत्वासिद्धेः । यत्तु प्रमातृत्वादिव्यवहारः सत्य एव मोक्षा-

भामतीव्याख्या

…यथैवमित्यत आह—तत्रैकत्वांशेनेति । यदि पुनरेकत्वमेव वस्तु सद्भवेत् ततो नानात्वाभावाद्वैदिकः कर्मकाण्डाश्रयो …श्च व्यवहारः समस्त एवोच्छिद्येत । ब्रह्म गोचराश्च श्रवणमननादयः सर्वे दत्तजलाञ्जलयः प्रसज्येरन् । एवं चानेकात्मकत्वे …मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति । तमिममनेकान्तवादं दूषयति—नैवं स्यादिति । इदं तावदत्र वक्तव्यम्, मृदा…त्वं घटशरावाद्यात्मना नानात्वमिति वदतः कार्यकारणयोः परस्परं किमभेदोऽभिमतः, आहो भेदः, उत भेदाभेदाविति । …द ऐकान्तिके मृदात्मनेति च घटशरावाद्यात्मनेति चोल्लेखद्वयं नियमश्च नोपपद्यते । भेदे चोल्लेखद्वयनियमावुपपन्नौ, आत्मनेति …सुप् । नह्यन्यस्यान्य आत्मा भवति । न चानेकान्तवादः । भेदाभेदकल्पे तूल्लेखद्वयं भवेदपि । नियमस्त्वयुक्तः । नहि …कार्यकारणयोः संकरे तद्धर्मावेकत्वनानात्वे न संकीर्येते इति संभवति । ततश्च मृदात्मनैकत्वं यावद्भवति तावद्घटशरावा…पि स्यात् । एवं घटशरावाद्यात्मना नानात्वं यावद्भवति तावन्मृदात्मना नानात्वं भवेत् । सोऽयं नियमः कार्यकारणयो…र्भेदमुपकल्पयति, अनिर्वचनीयतां वा कार्यस्य । पराक्रान्तं चास्माभिः प्रथमाध्याये तत् । आस्तां तावत् । तदेतच्छ्रुतिनिरा…करिष्यन्तीं श्रुतिमुदाहरति—मृत्तिकेत्येव सत्यमिति । स्यादेतत् । न ब्रह्मणो जीवभावः काल्पनिकः, किंतु भाविकः । अंशो …, तस्य कर्मसहितेन ज्ञानेन ब्रह्मभाव आधीयत इत्यत आह—स्वयं प्रसिद्धं हीति । स्वाभाविकस्यानादेरिति । यदुक्तं …शेन तु कर्मकाण्डाश्रयो लौकिकश्च व्यवहारः सेत्स्यतीति, तत्राह—बाधिते चेति । यावद्बाधं हि सर्वोऽयं व्यवहारः …स्वप्नमिव तदुपदर्शितपदार्थजातव्यवहारः । स च यथा जाग्रदवस्थायां बाधकान्निवर्तते एवं तत्त्वमस्यादिवाक्यपरिभाव-

आनन्दगिरीयव्याख्या

…नन्यांदुक्तार्थसंभावनायामपि मानं विना निर्धारणासिद्धिरित्याशङ्क्य व्यवस्थानुपपत्तिं प्रमाणयति—तत्रेति । विशिष्टदृष्टान्तप्रदर्श…नपरापि प्रकृतेऽर्थे प्रमाणमित्याह । एवं चेति । जीवजगतोर्ब्रह्मणो भिन्नाभिन्नत्वे प्रत्यक्षाविरोधेऽपि केवलभेदे तद्विरोधः स्याद…नेकान्तवादं दूषयति—नैवमिति । यदुक्तमेकत्वं नानात्वं चोभयमपि सत्यमिति, तत्राह—मृत्तिकेति । न केवलमेवकारसा…मर्थ्यादनृतत्वं किंतु वाचारम्भणश्रुतेश्चेत्याह—वाचारम्भणेति । तथापि कथमाकाशादिविकारवैतथ्यं दार्ष्टान्तिके पूर्वोक्तावधारणादे…रित्याशङ्क्य तत्रापि दृष्टान्तनिर्दिष्टार्थानुपपत्तेर्नैवमित्याह—दार्ष्टान्तिकेऽपीति । किंच कार्यप्रपञ्चस्यापि ब्रह्मवत्सत्यत्वे तद्विशिष्टजी…वोपदेशासिद्धिरित्याह—स आत्मेति । जीवस्य ब्रह्मैक्यं ध्यानादिसाध्यमभिसंधायोपदेशो भविष्यतीत्याशङ्क्याह—स्वयमिति । …ः संसारित्वासंसारित्वेन विरुद्धत्वादैक्यायोगात्तत्त्वं भविष्यसीति वाक्यविपरिणामः स्यादित्याशङ्क्याह—अतश्चेति । उपदेशश्च…। स्वाभाविकस्यानाद्यविद्याकृतस्येति यावत् । विरुद्धत्वस्य काल्पनिकत्वेनोपपत्तौ वाक्यस्वारस्यं भङ्क्त्वा विपरिणामकल्पना न …। यदुक्तं नानात्वांशेन सर्वव्यवहारोपपत्तिरिति, तत्र किमैक्यज्ञानोत्तरकालीनव्यवहारसिद्धये भेदांशस्य सत्यत्वं कल्प्यते …व्यवहारसिद्धयर्थमिति विकल्प्याद्यं दूषयति—बाधिते चेति । प्रमातृत्वादिबाधाद्बाधश्च व्यवहारो नास्तीति व्यवहाराभावेऽर्थाप…त्तिरनुपपन्नेति—दर्शयतीति । द्वितीये प्राक्तनव्यवहारस्य भ्रान्तत्वमभ्रान्तत्वं वा । प्रथमे तथाविधव्यवहारस्य काल्पनिकभेदे-

स्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्याभावम् । न चायं व्यवहाराभावोऽवस्थावि- ङ्कोऽभिधीयत इति युक्तं वक्तुम्, 'तत्त्वमसि' इति ब्रह्मात्मभावस्यानवस्थाविशेषनिबन्ध- तस्करदृष्टान्तेन चानृताभिसंधस्य बन्धनं सत्याभिसंधस्य च मोक्षं दर्शयन्नेकत्वमेवैकं प- दर्शयति (छा० ६।१६)। मिथ्याज्ञानविजृम्भितं च नानात्वम् । उभयसत्यतायां हि कथं रगोचरोऽपि जन्तुरनृताभिसंध इत्युच्येत । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ४।४।१९) इति च भेददृष्टिमपवदन्नेवैतद्दर्शयति । न चास्मिन्दर्शने ज्ञानान्मोक्ष इत्युपपद्यते ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनानभ्युपगमात् । उभयसत्यतायां थमेकत्वज्ञानेन नानात्वज्ञानमपनुद्यत इत्युच्यते । नन्वेकत्वैकान्ताभ्युपगमे नानात्वाभावा- क्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन्निर्विषयत्वात्, स्थाण्वादिष्विव पुरुषादिज्ञानानि

रत्नप्रभाव्याख्या

बस्थायां निवर्तत इति, तत्रेत्याह—**न चायमिति** । संसारसत्यत्वे तदवस्थायां जीवस्य ब्रह्मत्वं न स्यात्, कत्र विरोधात् । अतोऽसंसारिब्रह्माभेदस्य सदातनत्वावगमात्संसारोऽपि मिथ्यैवेत्यर्थः । किंच यथा लोके राज- भटैर्गृहीतोऽनृतवादी चेत्तप्तपरशुं गृह्णाति स दह्यते बध्यते च, तथा नानात्ववादी दह्यते, सत्यवादी चेन्न दह्यते तथैतदात्म्यमिदं सर्वमित्येकत्वदर्शी मुच्यत इति श्रुतदृष्टान्तेनैकत्वं सत्यं नानात्वं मिथ्येत्याह—**तस्करेति** । नानात्वव्यवहाराश्रयः । नानात्वनिन्दयाप्येकत्वमेव सत्यमित्याह—**मृत्योरिति** । किंचास्मिन्भेदाभेदमते दज्ञानाद्भेदज्ञाननिवृत्तेर्मुक्तिरिष्टा सा न युक्ता, भेदज्ञानस्य भ्रमत्वानभ्युपगमात्, प्रमायाः प्रमान्तराबाध्यत्वात् स्मिन्निति । वैपरीत्यस्यापि संभवादिति भावः । इदानीं प्रत्यक्षादिप्रामाण्यान्यथानुपपत्त्या नानात्वस्य सत्यत्वं जमुद्घाटयति—**नन्वित्यादिना** । एकत्वस्यैकान्तः कैवल्यम् । व्याहन्येरन्नप्रमाणानि स्युः । उपजीव्यप्रत्यक्ष- वेदान्तानां भेदपरत्वमुचितमिति भावः । ननु कर्मकारकाणां यजमानादीनां विद्याकारकाणां शिष्यादीनां च

भामतीव्याख्या

नाभ्यासपरिपाकभुवा शारीरस्य ब्रह्मात्मभावसाक्षात्कारेण बाधकेन निवर्तते । स्यादेतत् । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिना मिथ्याज्ञानाधीनो व्यवहारः क्रियाकारकादिलक्षणः सम्यग्ज्ञानेनापनीयत इति न ब्रूमः, व्यवहारोऽवस्थान्तरप्राप्त्या निवर्तते, यथा बालकस्य कामचारवादभक्षतोपनयनप्राप्तौ निवर्तते । नच तावता बन्धनो भवत्येवमत्रापीत्यत आह—**न चायं व्यवहाराभाव इति** । कुतः, **तत्त्वमसीति** ब्रह्मात्म- न खल्वेतद्वाक्यमवस्थाविशेषविनियतं ब्रह्मात्मभावमाह जीवस्य, अपि तु न भुजङ्गो रज्जुरियमितिवत् अपि च सत्यानृताभिधानेनाप्येतदेव युक्तमित्याह—**तस्करदृष्टान्तेन चेति** । **न चास्मिन्दर्शन इति** । कठस्य दण्डकमण्डलुकुण्डलशालिनः कुण्डलिज्ञानं दण्डवत्तां कमण्डलुमत्तां बाधते । तत् कस्य हेतोः । तेषां कुण्डलादीनां भाविकत्वात् । तद्वदिहापि भाविकगोचरेणैकात्म्यज्ञानेन न नानात्वं भाविकमपवदनीयम् । नहि ज्ञानेन मिथ्याज्ञानेनारोपितमित्यर्थः । चोदयति—**नन्वेकत्वैकान्ताभ्युपगम इति** । अबाधितानधिगतासंदिग्ध- मिति प्रमाणसामान्यलक्षणोपपत्त्या प्रत्यक्षादीनि प्रमाणतामश्नुवते । एकत्वैकान्ताभ्युपगमे तु तेषां सर्वेषां भेदविषयाणाम- प्रामाण्यं प्रसज्येत । तथा विधिप्रतिषेधशास्त्रमपि भावनाभाव्यभावककरणेतिकर्तव्यताभेदापेक्षत्वाद्व्याहन्येत । तथा एकदेशाक्षेपेण च सर्ववेदाक्षेपाद्वेदान्तानामप्यप्रामाण्यमित्यभेदैकान्ताभ्युपगमहानिः । न केवलं विधिनिषेधशास्त्रं

आनन्दगिरीयव्याख्या

नोपपत्तिरिति मत्वा चरमं निरस्यति—**न चेति** । तत्र श्रुतितात्पर्यविरोधं हेतुमाह—**तत्त्वमिति** । 'पुरुषं सोम्योत हस्तगृहीतमानय- न्ति' इत्यादिना सत्यानृताभिसंधपुरुषनिदर्शनप्रदर्शनसामर्थ्यादपि सिद्धमैक्यस्यैव सत्यत्वमित्याह—**तस्करेति** । स्यैव नियम्यते, तत्राह—**उभयेति** । विपरीतमपि किं न स्यादित्यपेरर्थः । इतश्चैकत्वमेवैकं पारमार्थिकं न नानात्व- **ति** । एकत्वधियो मुक्तिहेतुत्वोक्तिरपि भेदाभेदवादेऽनुपपन्नेत्याह—**न चेति** । भेदांशधियोऽभेदांशधिया रित्याशङ्क्य वैपरीत्यस्यापि संभवान्मैवमित्याह—**उभयेति** । इदानीं पूर्ववादी स्वाभिप्रायं प्रकटयति—**नन्विति** । ज्यर्थमपेक्ष्यमाणत्वाददुष्टत्वाद्व्यभिचारत्वादव्याकुलत्वादन्यत्रानवकाशत्वात्पूर्वभावित्वेनप्रतिष्ठितत्वात्पदपदार्थविनाभावित्वा- द्विरोधे सत्याम्नायतो नात्यन्तिकमैक्यमादेयमिति भावः । निरालम्बनत्वेनाप्रामाण्ये दृष्टान्तः—**स्थाण्वादिष्विवेति** । न्ताभ्युपगमे प्रत्यक्षादिविरोधः किंतु कर्मकाण्डविरोधश्चेत्याह—**तथेति** । भेदापेक्षत्वात् । भावनाभाव्य- यावत् । ननु प्रत्यक्षादीनां कर्मकाण्डस्य चाप्रामाण्यमद्वैतवादिनां नानिष्टं, ते हि ज्ञानकाण्डमेवैकं

विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात्तदभावे व्याहन्येत, मोक्षशास्त्रस्यापि शिष्यशासित्रादिभेदापेक्षत्वात्तदभावे व्याघातः स्यात्। कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येतेति। अत्रोच्यते—नैष दोषः। सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात्सत्यत्वोपपत्तेः। स्वप्नव्यवहारस्येव प्राग्बोधात्। यावद्धि न सत्यात्मैकत्वप्रतिपत्तिस्तावत्प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्पद्यते। विकारानेव त्वहं ममेत्यविद्ययात्मात्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा। तस्मात्प्राग्ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः। यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्न उच्चावचान्भावान्पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक्प्रबोधात्, नच प्रत्यक्षाभासाभिप्रायस्तत्काले भवति, तद्वत्। कथं त्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत। नहि

### रत्नप्रभाव्याख्या

…ज्ञानकाण्डयोः प्रवृत्तेः स्वप्रमेयस्य धर्मादेरबाधात्प्रामाण्यमव्याहतमित्याशङ्क्याह—**कथं चानृतेनेति**। धूलिकल्पितधूमेनानितस्य वह्नेरिव प्रमेयबाधापत्तेरिति भावः। तत्र द्वैतविषये प्रत्यक्षादीनां यावद्बाधं व्यावहारिकं प्रामाण्यमुपपद्यत इत्याह—**अत्रोच्यत इत्यादिना**। सत्यत्वं बाधाभावः। बाधो मिथ्यात्वनिश्चयः। वस्तुतो मिथ्यात्वेऽपि विकारेषु तन्निश्चयाभावेन प्रत्यक्षादिव्यवहारोपपत्तावुक्तदृष्टान्तं विवृणोति—**यथा सुप्तस्य प्राकृतस्येति**। एवं द्वैतप्रमाणानां व्यवहारकाले बाधशून्यबोधकत्वं व्यावहारिकं प्रामाण्यमुपपाद्याद्वैतप्रमाणानां वेदान्तानां सर्वकालेषु बाधशून्यब्रह्मबोधकत्वं तात्त्विकं प्रामाण्यमुपपादयितुमुक्तशङ्कामनुवदति—**कथं त्वसत्येनेति**। किमसत्यात्सत्यं न जायते, किमुत सत्यस्य ज्ञानं न। आद्य दृष्ट एव।

### भामतीव्याख्या

…षेपः स्वरूपेणास्यापि भेदापेक्षत्वादित्याह—**मोक्षशास्त्रस्यापीति**। अपि चास्मिन् दर्शने वर्णपदवाक्यप्रकरणादीनामलीकत्वभवमद्वैतज्ञानमसमीचीनं भवेत्, न खल्वलीकाद्धूमकेतनज्ञानं समीचीनमित्याह—**कथं चानृतेन मोक्षशास्त्रेणेति**। …हरति—**अत्रोच्यत इति**। यद्यपि प्रत्यक्षादीनां तात्त्विकमबाधितत्वं नास्ति, युक्त्यागमाभ्यां बाधनात्, तथापि व्यवहारे …नानात्सांव्यवहारिकमबाधनम्। नहि प्रत्यक्षादिभिरर्थं परिच्छिद्य प्रवर्तमानो व्यवहारे विसंवाद्यते सांसारिकः कश्चित्। तस्मा…नाथ प्रमाणलक्षणमतिपतन्ति प्रत्यक्षादय इति। **सत्यत्वोपपत्तेरिति**। सत्यत्वाभिमानोपपत्तेरिति। प्रहणकवाक्यमेतत्। …णे—**यावद्धि न सत्यात्मैकत्वप्रतिपत्तिरिति**। विकारानेव तु शरीरादीनहमित्यात्मभावेन पुत्रपश्वादीन्ममेत्यात्मीयेनेति योजना। **वैदिकश्चेति**। कर्मकाण्डमोक्षशास्त्रव्यवहारसमर्थना। 'स्वप्नव्यवहारस्येव' इति विभजते—**यथा सुप्तस्य प्राकृतस्येति**। 'कथं चानृतेन मोक्षशास्त्रेण' इति यदुक्तं तदनुभाष्य दूषयति—**कथं त्वसत्येनेति**। शक्यमत्र वक्तुं श्रवणा…दि आत्मसाक्षात्कारपर्यन्तो वेदान्तसमुत्थोऽपि ज्ञाननिचयोऽसत्यः, सोऽपि हि वृत्तिरूपः कार्यतया निरोधधर्मा, यस्तु ब्रह्मस्वभावस्वरोऽसौ न कार्यस्तत्स्वभावत्वात्, तस्मादचोद्यमेतत् कथमसत्यात्सत्योत्पाद इति। यत्खलु सत्यं न तदुत्पद्यत इति …सत्यादुत्पादः। यच्चोत्पद्यते तत्सर्वमसत्यमेव। सांव्यवहारिकं तु सत्यत्वं वृत्तिरूपस्य ब्रह्मसाक्षात्कारस्येव श्रवणादीनाम्। तस्मादभ्युपेत्य वृत्तिस्वरूपस्य ब्रह्मसाक्षात्कारस्य परमार्थसत्यत्वं व्यभिचारोद्भावनमिति मन्तव्यम्। यद्यपि सांव्यवहा…सत्यादेव भयात्सत्यं मरणमुत्पद्यते तथापि भयहेतुरहिस्तज्ज्ञानं वाऽसत्यं ततो भयं सत्यं जायत इत्यसत्यात्सत्यस्योत्पत्ति…

### आनन्दगिरीयव्याख्या

…शास्त्रस्येति। ननु मिथ्याभूतशिष्यादिभेदपराधीनस्य मोक्षशास्त्रस्य मिथ्यात्वेऽपि तत्प्रमेयस्य प्रत्यगैक्यस्य सत्यत्वादस्मत्पक्षसिद्धिरिति, …—**कथं चेति**। प्रत्यक्षादिना काण्डद्वयेन च विरोधान्न समन्वयाधिगम्यैक्यं संभावितमिति चोदिते परिहरति—**अत्रेति**। यत्ता…ज्ञानाभ्युपगमे लौकिकवैदिकव्यवहारव्याहतिरिति, तत्राह—**नैष दोष इति**। तत्त्वज्ञानादूर्ध्वं प्राग्वा काले व्यवहारानु…इति विकल्प्याद्यमङ्गीकृत्य द्वितीयं प्रत्याह—**सर्वव्यवहाराणामिति**। प्रत्यक्षादीनां द्वैतावगाहिनां तात्त्विकप्रमाणत्वाभावेऽपि बाधाभावाद्व्यवहारसमर्थवस्तुकतारूपप्रामाण्यसिद्धेः सम्यग्ज्ञानात्पूर्वं सर्वव्यवहारसिद्धिरित्यर्थः। तत्त्वज्ञानात्पूर्वं सत्यत्वाभिमानव्यवहारोपपत्तौ दृष्टान्तमाह—**स्वप्नेति**। आत्मनो ब्रह्मात्मतायाः स्वाभाविकत्वाद्विकारेष्वनृतत्वमनीषामनुन्मेषे कथं सर्वव्यवहार…मित्याह—**यावद्धीति**। तथापि स्वभावसिद्धब्रह्मात्मतानुरोधेन विकारेष्वौदासीन्यसंभवात्कुतो व्यवहारोपपत्तिरित्याशङ्क्याह—…नेति। मिथ्याभिमानवतो वस्तुस्वाभाव्यमपहाय प्राक्तत्त्वज्ञानाद्व्यवहारोपपत्तिं निगमयति—**तस्मादिति**। यदुक्तं स्वप्नव्यवहार…दृष्टान्तेन, तद्विवृणोति—**यथेति**। 'या निशा सर्वभूतानाम्' इत्यादिस्मृतेर्ज्ञानी व्यवहारावस्थायां सुप्तो भवति, ततो व्यावर्त…प्राकृतस्येति। प्रत्यक्षाभिमतमित्युक्तत्वादाभासत्वाभिमाने प्राप्ते प्रत्याह—**नचेति**। उक्तदृष्टान्तवशात्तत्त्वज्ञानात्प्राच्यामवस्थायां …पि सत्यत्वाभिमानद्वारा सर्वव्यवहारसिद्धिरिति दार्ष्टान्तिकमाह—**तद्वदिति**। कथं चानृतेन मोक्षशास्त्रेणेत्युक्तमनुभाषते—…मिति। असत्याच्च सत्यप्रतिपत्तिरित्यत्र दृष्टान्तमाह—**नहीति**। असत्यादपि मरणादिरिन्सत्यंगेन कार्यं नविष्यतीत्याशङ्क्याह—

रज्जुसर्पेण दष्टो म्रियते । नापि मृगतृष्णिकाम्भसा पानावगाहनादिप्रयोजनं क्रियत इ
दोषः । शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः । स्वप्नदर्शनावस्थस्य च सर्पदंशनोद
दिकार्यदर्शनात् । तत्कार्यमप्यनृतमेवेति चेद्ब्रूयात् । तत्र ब्रूमः—यद्यपि स्वप्नदर्शनावस्थ
शनोदकस्नानादिकार्यमनृतं तथापि तदवगतिः सत्यमेव फलं, प्रतिबुद्धस्याप्यबाध्यमान
नहि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्यमानस्तदवगतिं
थ्येति मन्यते कश्चित् । एतेन स्वप्नदृशोऽवगत्यबाधनेन देहमात्रात्मवादो दूषितो वे

---

रत्नप्रभाव्याख्या

नहि वयं वाक्योत्थज्ञानं सत्यमित्यङ्गीकुर्मः । अङ्गीकृत्यापि दृष्टान्तमाह—नैष दोष इति । सर्पेणादष्टस्यापि
ल्पितविषात्सत्यमरणमूर्च्छादिदर्शनादसत्यात् सत्यं न जायत इत्यनियम इत्यर्थः । दृष्टान्तान्तरमाह—स्वप्ने
त्सर्पोदकादेः सत्यस्य दंशनस्नानादिज्ञानस्य कार्यस्य दर्शनाद्व्यभिचार इत्यर्थः । यथाश्रुतमादाय शङ्कते—तत्का
उक्तमर्थं प्रकटयति—तत्र ब्रूम इत्यादिना । अवगतिर्वृत्तिः घटादिवत्सत्यापि प्रातिभासिकस्वप्नदृष्टवस्तु
वा वृत्त्यभिव्यक्तमवगतिशब्दार्थः । प्रसङ्गाद्देहात्मवादोऽपि निरस्त इत्याह—एतेनेति । स्वप्नस्थावगतेः
तस्य मया तादृशः स्वप्नोऽवगत इत्यबाधितावगतिप्रतिसंधानं न स्यात् । अतो देहभेदेऽप्यनुसंधानदर्शनाद

भामतीव्याख्या

रुक्ता । यद्यपि चाहिज्ञानमपि स्वरूपेण सत्तथापि न तज्ज्ञानत्वेन भयहेतुरपि त्वनिर्वाच्याहिरूपितत्वेन ।
भयप्रसङ्गाज्ज्ञानत्वेनाविशेषात् । तस्मादनिर्वाच्याहिरूपितं ज्ञानमप्यनिर्वाच्यमिति सिद्धमसत्यादपि सत्यस्योपजन
सर्वस्मादसत्यात्सत्यस्योपजनः, यतः समारोपितधूमभावाया धूममहिष्या वह्निज्ञानं सत्यं स्यात् । नहि चक्षुषो
जायत इति रसादिज्ञानेनापि ततः सत्येन भवितव्यम् । यतो नियमो हि स तादृशः सत्यानां यतः कुतश्चित्
इति । एवमसत्यानामपि नियमो यतः कुतश्चिदसत्यात्सत्यं कुतश्चिदसत्यं, यथा दीर्घत्वादेर्वर्णेषु समारोपितत्वात्
ज्यानिविरहमवगच्छन्ति सत्यम् । अजिनमित्यतस्तु समारोपितदीर्घभावाज्ज्यानिविरहमवगच्छन्तो भवन्ति भ्रान्ताः ।
समारोपं प्रति कश्चिदस्ति भेदः । तस्मादुपपन्नमसत्यादपि सत्यस्योदय इति । निदर्शनान्तरमाह—स्वप्नदर्शना
यथा सांसारिको जाग्रद्भुजङ्गं दृष्ट्वा पलायते ततश्च न दंशवेदनामाप्नोति, पिपासुः सलिलमालोक्य पातुं प्रवर्तते
पायमाप्यायितः सुखमनुभवति, एवं स्वप्नान्तिकेऽपि तदवस्थं सर्वमित्यसत्यात्कार्यसिद्धिः । शङ्कते—तत्का
मेवेति । एवमपि नासत्यात्सत्यस्य सिद्धिरुक्तेत्यर्थः । परिहरति—तत्र ब्रूमः । यद्यपि स्वप्नदर्शनावस्थ
हि सुप्तोत्थितोऽवगम्यं बाधितं मन्यते न तदवगतिं, तेन यद्यपि परीक्षका अनिर्वाच्यरूपितामवगतिमनिर्वाच्यां
लौकिकाभिप्रायेणैतदुक्तम् । अत्रान्तरे लौकायतिकानां मतमपाकरोति—एतेन स्वप्नदृशोऽवगत्यबाधनेनेति
थं चैत्रस्तारक्षवीं व्यात्तविकटदंष्ट्राकरालवदनामुत्तम्बबम्भ्रमन्मस्तकावचुम्बिलाङ्गूलामतिरोषारुणस्तब्धविशालवृत्त
स्फुरद्भीषणां स्फटिकाचलभित्तिप्रतिबिम्बितामभ्यमित्रीणां तनुमास्थाय स्वप्ने प्रतिबुद्धो मानुषीमात्मनस्तनुं
तमात्मानं प्रतिसंदधानो देहातिरिक्तमात्मानं निश्चिनोति, न तु देहमात्रम्, तन्मात्रत्वे देहवत्प्रतिसंधाना
चैतदुपपद्येत यदि स्वप्नदृशोऽवगतिरबाधिता स्यात् । तद्बाधे तु प्रतिसंधानाभाव इति । असत्याच्च सत्यप्रतीतिः

आनन्दगिरीयव्याख्या

नापीति । इतिशब्दो दार्ष्टान्तिकप्रदर्शनार्थः । सत्यस्यासत्यादुत्पत्तिर्वा प्रतिपत्तिर्वा प्रतिषिध्यते । नाद्यः,
मानस्य सर्वस्यैव वाचारम्भणत्वादित्यभिप्रेत्याह—नैष दोष इति । सत्यस्यापि केचिदुत्पत्तिमुपगच्छन्ति,
इत्याह—शङ्केति । शङ्कायाः स्वरूपेण सत्यत्वेऽपि विषयविशेषितत्वेनासत्यतेति भावः । द्वितीयेऽपि सत्या
त्यान्नेति विकल्प्याद्यं निरस्यति—स्वप्नेति । स्वप्नदर्शनवत्तत्कार्यस्यापि सर्पदंशनादेरसत्यत्वात्तद्विशेषितदर्शननि
प्रतिपत्त्युत्पत्ताविदमुदाहरणमिति शङ्कते—तत्कार्यमपीति । विषयस्यासत्यत्वेऽपि विषयिणो ज्ञानस्य सत्यत्वा
तत्रेति । नन्ववगतिशब्देन स्वरूपचैतन्यं वृत्तिज्ञानं वोच्यते । प्रथमे तस्याजन्यत्वादसत्याच्च सत्यप्रतिपत्त्युत्प
तस्य विषयातिरिक्ताकाराभावात् 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इत्यङ्गीकारात्तदनिर्वाच्य
सत्यात्सत्यप्रतिपत्त्युत्पत्तिः, तत्राह—नहीति । परपक्षे सत्यस्यापि ज्ञानस्य जन्यत्वाभ्युपगमादस्मत्पक्षे
स्यापि ज्ञानस्य लौकिकाभिप्रायेण सत्यत्वादसत्यात्सत्यप्रतिपत्त्युत्पत्तौ दृष्टान्तत्वमविरुद्धमिति भावः । नन्ववगति
वृत्तिज्ञानं किंतु शरीराकारपरिणतभूतचतुष्टयनिष्ठं रूपादितुल्यं ज्ञानमिति लौकायतिकमतमाशङ्क्याह—एतेनेति
विशदयति—स्वप्नदृश इति । स्वप्नजाग्रद्देहयोर्व्यभिचारेऽपि प्रत्यभिज्ञानात्तदनुगतात्मैक्यसिद्धेः, चैतन्यस्य च
दनुपलब्धावनुपलब्धिप्रसङ्गात्, अवगतेश्चाबाधात्तद्रूपस्यात्मनो देहद्वयातिरेकसिद्धेर्देहमात्रात्मवादो न युक्त इत्

तथाच श्रुतिः—'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ॥' (छा० ५।२।९) इत्यसत्येन स्वप्नदर्शनेन सत्यायाः समृद्धेः प्राप्तिं दर्शयति । तथा प्रत्यक्षदर्शनेषु केषुचिदरिष्टेषु जातेषु 'न चिरमिव जीविष्यतीति विद्यात्' इत्युक्त्वा 'अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिना तेन तेनासत्येनैव स्वप्नदर्शनेन सत्यमरणं सूच्यत इति दर्शयति । प्रसिद्धं चेदं लोकेऽन्वयव्यतिरेककुशलानामीदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यत ईदृशेनासाध्वागम इति । तथाकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः । अपिचान्त्यमिदं प्रमाणमात्मैकत्वस्य प्रतिपादकं नातः परं किंचिदाकाङ्क्ष्यमस्ति । यथा हि लोके यजेतेत्युक्ते किं केन कथमित्याकाङ्क्ष्यते नैवं 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्युक्ते किंचिदन्यदाकाङ्क्ष्यमस्ति, सर्वात्मैकत्वविषयत्वादवगतेः । सति ह्यन्यस्मिन्नवशिष्यमाणेऽर्थ आकाङ्क्षा स्यात् । नत्वात्मैकत्वव्यतिरेकेणावशिष्यमाणोऽन्योऽर्थोऽस्ति य आकाङ्क्ष्येत । न चेयमवगतिर्नोत्पद्यत इति शक्यं वक्तुम्,

---

रत्नप्रभाव्याख्या

र्थः । असत्यात्सत्यस्य ज्ञानं न जायत इति द्वितीयनियमस्य श्रुत्या व्यभिचारमाह—**तथाच श्रुतिरिति** । नच स्त्रियो ...त्वेऽपि तद्दर्शनात्सत्यादेव सत्यायाः समृद्धेर्ज्ञानमिति वाच्यम्, विषयविशिष्टत्वेन दर्शनस्यापि मिथ्यात्वात्प्रकृतेऽपि सत्ये ब्रह्मणि ...वेदानुगतचैतन्याऽज्ञानसंभवाच्चेति भावः । असत्यात्सत्यस्येष्टस्य ज्ञानमुक्त्वानिष्टस्य ज्ञानमाह—**तथेति** । असत्या... ...स्य ज्ञाने दृष्टान्तान्तरमाह—**तथाकारादीति** । रेखास्वकारत्वादिभ्रान्त्या सत्या आकारादयो ज्ञायन्त इति प्रसिद्धमि... ...र्थः । एवमसत्यात्सत्यस्य जन्मोक्त्या यदर्थक्रियाकारि तत्सत्यमिति नियमो भग्नः, अनृतात्सत्यस्य ज्ञानोक्त्या यदनृतकरणग... ...तद्बाध्यं कूटलिङ्गानुमितवह्निवदिति व्याप्तिर्भग्ना । तथा च कल्पितानामपि वेदान्तानां सत्यब्रह्मबोधकत्वं संभवतीति तात्त्विकं ...बाध्यमिति भावः । यदुक्तं एकत्वनानात्वव्यवहारसिद्धये उभयं सत्यमिति, तन्न । भेदस्य लोकसिद्धस्यापूर्वफलवदभेदविरोधेन ...त्वकल्पनायोगात् । किंच यद्युभयोरेकदा व्यवहारः स्यात् तदा स्यादपि सत्यत्वम् । नैवमस्ति । एकत्वज्ञानेन चरमेणा... ...स्य नानात्वस्य निःशेषं बाधात्, शुक्तिज्ञानेनेव रजतस्येत्याह—**अपि चान्त्यमिति** । ननूपजीव्यद्वैतप्रमाणविरोधादे... ...वगतिर्नोत्पद्यत इत्यत आह—**न चेयमिति** । तत् किलात्मतत्त्वमस्य पितुर्वाक्यात् श्वेतकेतुर्विज्ञातवानिति ज्ञानोत्पत्तेः ...त्वात्सामग्रीसत्त्वाच्चेत्यर्थः । व्यावहारिकगुरुशिष्यादिभेदमुपजीव्य ज्ञायमानवाक्यार्थावगतेः प्रत्यक्षादिगतं व्यावहारि-

भामतीव्याख्या

...द्वा चेत्याह—**तथाच श्रुतिरिति । तथाकारादीति** । यद्यपि रेखास्वरूपं सत्यं तथापि तद्यथासंकेतमसत्यम् । ...संकेतयितारः संकेतयन्तीदृशेन रेखाभेदेनायं वर्णः प्रत्येतव्योपि त्वीदृशो रेखाभेदोऽकार ईदृशश्च ककार इति । तथा चास... ...नासंकेतात्समीचीनवर्णावगतिरिति सिद्धम् । यच्चोक्तमेकत्वांशेन ज्ञानमोक्षव्यवहारः सेत्स्यति, नानात्वांशेन तु कर्मकाण्डा... ...लौकिकश्च व्यवहारः सेत्स्यतीति, तत्राह—**अपि चान्त्यमिदं प्रमाणमिति** । यदि सत्यैकत्वानेकत्वनिबन्धनौ व्यवहा... ...स्य पुंसोऽपर्यायेण संभवतस्ततस्तदर्थमुभयसद्भावः कल्प्येत, न त्वेतदस्ति । नह्येकत्वावगतिनिबन्धनः कश्चिदस्ति व्यवहारः, तद- ...ः सर्वोत्तरत्वात् । तथाहि—'तत्त्वमसि' इत्यैकात्म्यावगतिः समस्तप्रमाणतत्फलव्यवहारानपबाधमानैवोदीयते, नतस्याः परस्ता- ...दनुकूलं प्रतिकूलं चास्ति, यदपेक्षेत, येन चेयं प्रतिक्षिप्येत, तत्रानुकूलप्रतिकूलनिवारणान्नातः परं किंचिदाकाङ्क्ष्य- ... । न चेयमवगतिर्डुलिक्षीरप्रायेत्याह—**न चेयमिति** । स्यादेतत् । अन्त्या चेदियमवगतिर्निष्प्रयोजना तर्हि तथा च न प्रेक्षा-

आनन्दगिरीयव्याख्या

...ब्रवीत्युपसाय सत्यस्य प्रतिपत्तिर्नासत्यादिति पक्षं श्रुत्या निराचष्टे—**तथाचेति** । असत्यात्सत्यप्रतिपत्त्युत्पत्तौ छान्दोग्यश्रुति- ...वच्छ्रुतिरपि भवतीत्याह—**तथेति** । सत्यस्य प्रतिपत्तिरसत्याद्भवति, तत्रान्वयव्यतिरेकावपि प्रमाणमित्याह—**प्रसिद्धं चेति** । ...सत्यस्य प्रतिपत्तौ दृष्टान्तान्तरमाह—**तथेति** । रेखास्वरूपस्य सत्यत्वेऽप्यकारादिरूपतया तथात्वाभावादसत्यात्सत्यप्रतिपत्तिरित्य- ...नृतेति विशेषणम् । आगमादसत्यादेव सत्यस्य ब्रह्मात्मनः ज्ञानत्वेऽपि पूर्वोक्तनीत्या बलवतोऽध्यक्षादेरागमबाध्यत्वं कथमित्या- ...—**अपिचेति** । उक्तशङ्कानिवृत्त्यर्थमपिचेत्युक्तम् । निरपेक्षत्वं सत्युत्तरभाविप्रमाणत्वात्प्रत्यक्षादिबाधकत्वमागमस्येत्याह— ...**ति** । आगमप्रामाण्यस्य फलपर्यन्तत्वात्तस्य क्रियासाध्यत्वात्तस्या भेदप्रमितिपूर्वकत्वात्कथमात्मैक्यज्ञानसान्त्यतेत्याशङ्क्याह— **इति** । तदेव व्यतिरेकदृष्टान्तेन स्पष्टयति—**यथेति** । तत्त्वमसीत्युक्ते सर्वाकाङ्क्षोपशान्तिरित्यत्र हेतुमाह—**सर्वात्मेति** । या ...वगतिस्तयेन सा सर्वस्य पूर्णस्य ब्रह्मणः प्रत्यगात्मनश्चैकरस्यमधिकृत्य भवति । तथाच प्रत्यगात्मातिरिक्तस्याकाङ्क्षणीयस्यानवशिष्टत्वा- ...काङ्क्षोपशान्तिरित्यर्थः । श्रुताद्वाक्यादवगतौ सत्यामवशिष्यमाणार्थाभावेनाकाङ्क्षाभावं विवृणोति—**सति हीति** । प्रत्यक्षादिवि- ...रोधेनावगाह्यमाना नोत्पद्यते, कुतः सर्वाकाङ्क्षानिवृत्तिरित्याशङ्क्याह—**न चेति** । अस्य पितुर्वचनात्तदात्मतत्त्वं श्वेतकेतुर्विज्ञात- ...वान् । आदिशब्दात् 'आनन्दो ब्रह्मेति व्यजानात्' इत्याद्या श्रुतिर्गृह्यते । किंचावगतिमुद्दिश्यान्तरङ्गबहिरङ्गसाधनविधानादपि

'तद्धास्य विजज्ञौ' (छा० ६।१६।३) इत्यादिश्रुतिभ्यः । अवगतिसाधनानां च श्रवणादीनां नुवचनादीनां च विधानात् । न चेयमवगतिरनर्थिका भ्रान्तिर्वेति शक्यं वक्तुम् । अविद्यानि लदर्शनात्, बाधकज्ञानान्तराभावाच्च । प्राक्चात्मैकत्वावगतेरव्याहतः सर्वः सत्यानृत लौकिको वैदिकश्चेत्यवोचाम । तस्मादनन्येन प्रमाणेन प्रतिपादित आत्मैकत्वे समस्तस्य भेदव्यवहारस्य बाधितत्वान्नानेकात्मकब्रह्मकल्पनावकाशोऽस्ति । ननु मृदादिदृष्टान्तप्र रिणामवद्ब्रह्म शास्त्रस्याभिमतमिति गम्यते । परिणामिनो हि मृदादयोऽर्था लोके सं इति । नेत्युच्यते । 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ० ४। 'स एष नेति नेत्यात्मा' (बृ० ३।९।२६), 'अस्थूलमनणु' (बृ० ३।८।८) इत्याद्याभ्यः विक्रियाप्रतिषेधश्रुतिभ्यो ब्रह्मणः कूटस्थत्वावगमात् । न ह्येकस्य ब्रह्मणः परिणा तद्रहितत्वं च शक्यं प्रतिपत्तुम् । स्थितिगतिवत्स्यादिति चेत् । न । कूटस्थस्येति विशे

रत्नप्रभाव्याख्या

कं प्रामाण्यमुपजीव्यं, तच्च पारमार्थिकैकत्वावगत्या न विरुध्यते । किंतु तया विरोधादनुपजीव्यं प्रत्यक्षादेस्तात्त्विकं बाध्यत इति भावः । किंचैकत्वावगतेः फलवत्प्रमात्वाभिष्फलो द्वैतभ्रमो बाध्य इत्याह—न चेयमिति । ननु मिथ्यात्वे स्वप्नो मिथ्या जाग्रत् सत्यमित्यादिर्लौकिको व्यवहारः, सत्यं चानृतं च सत्यमभवदिति वैदिकश्च कथं स्वप्ने इदं सत्यमिदमनृतमिति तात्कालिकबाधाबाधाभ्यां व्यवहारस्तथा दीर्घस्वप्नेऽपीत्युक्तस्वप्नदृष्टान्तं स्मारयति— व्यवहारार्थं नानात्वं सत्यमिति कल्पनमसंगतमित्युपसंहरति—तस्मादिति । नेदं कल्पितं, किंतु श्रुतमि न्विति । कार्यकारणयोरनन्यत्वांशेऽयं दृष्टान्तः, न परिणामित्वे, ब्रह्मणः कूटस्थत्वश्रुतिविरोधादिति परिहारः इति । सृष्टौ परिणामित्वं प्रलये तद्राहित्यं च क्रमेणाविरुद्धमिति दृष्टान्तेन शङ्कते—स्थितीति । कूटस्थस्य विक्रिया न युक्ता कूटस्थत्वव्याघातादित्याह—नेति । कूटस्थत्वासिद्धिमाशङ्क्याह—कूटस्थस्येति । कूटस्थ

भामतीव्याख्या

वह्निरुपादीयेत, प्रयोजनवत्त्वे वा नान्त्या स्यादित्यत आह—न चेयमवगतिरनर्थिका कुतः, अविद्यानिवृत्तिद र्शनात् । नहीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति येन नान्त्या स्यात्, किंत्वविद्याविरोधिस्वभावतया तन्निवृत्तिरूपा अविद्यानिवृत्तिश्च न तत्कार्यतया फलमपि त्विष्टतया, इष्टलक्षणत्वात्फलस्येति । प्रतिकूलं पराचीनं निराकर्तुमाह—भ्रान्तिः कुतः, बाधकेति । स्यादेतत् । मा भूदेकत्वनिबन्धनो व्यवहारोऽनेकत्वनिबन्धनस्त्वस्ति, तदेव हि सकलमनुभवसिद्धम् अतस्तत्सिद्धधर्थमनेकत्वस्य कल्पनीयं तात्त्विकत्वमित्यत आह—प्राक्चेति । व्यवहारो हि बुद्धिपूर्वकारिणां बुद्धेः स्तात्त्विकत्वेन, भ्रान्त्यापि तदुपपत्तेरित्यावेदितम् । सत्यं च तदविसंवादात्, अनृतं च विचारासहतयानिर्वाच्यत्वात् । स्यानपेक्षतया बाधकत्वं, अनेकत्वज्ञानस्य च प्रतियोगिग्रहापेक्षया दुर्बलत्वेन बाध्यत्वं वदन् प्रकृतमुपसंहरति— प्रमाणेनेति । स्यादेतत् । न वयमनेकत्वव्यवहारसिद्धधर्थमनेकत्वस्य तात्त्विकत्वं कल्पयामः, किंतु श्रौतमेवास्य चोदयति—ननु मृदादीति । परिहरति—नेत्युच्यत इति । मृदादिदृष्टान्तेन हि कथंचित्परिणाम उभेतुमपि, 'मृत्तिकेत्येव सत्यम्' इति कारणमात्रसत्यत्वावधारणेन कार्यस्यानृतत्वप्रतिपादनात् । साक्षात्कूटस्थत्वे सन्ति सहस्रशः श्रुतय इति न परिणामधर्मता ब्रह्मणः । अथ कूटस्थस्यापि परिणामः कस्मान्न भवतीत्यत आह— शङ्कते—स्थितिगतिवदिति । यथैकबाणाश्रये गतिनिवृत्ती एवमेकस्मिन्ब्रह्मणि परिणामश्च तदभावश्च इति । निराकरोति—न । कूटस्थस्येति विशेषणादिति । कूटस्थनित्यता हि सदातनी स्वभावादप्रच्युतिः

आनन्दगिरीयव्याख्या

तदुत्पत्तिरेष्टव्येत्याह—अवगतीति । नन्ववगतिरुत्पन्नापि नार्थवती, सिद्धेऽर्थे स्वरूपेण फलाभावान्मानान्तरविरोधा शङ्क्याह—न चेयमिति । आनर्थक्याभावे हेतुमाह—अविद्येति । भ्रान्तित्वाभावे हेतुमाह—बाधकेति । न तस्य कल्पितद्वैतविषयत्वेन तात्त्विकाद्वैतप्रमित्यविरोधित्वादित्यर्थः । ननु सर्वस्य कल्पितत्वे सत्यासत्यव्यवहारो दित्याशङ्क्य स्वप्नदृष्टान्तेनोक्तं स्मारयति—प्राक्चेति । आगमादर्थवती सर्वाकाङ्क्षाशान्तिहेतुर्ब्रह्मात्मप्रतिपत्तिर्निर्वर्तते तस्मादिति । कल्पनाममृष्यमाणः श्रौतमेव ब्रह्मणोऽनेकात्मकत्वमिति शङ्कते—नन्विति । कथं यथोक्तदृष्टान्तस्य श्रौतमित्याशङ्क्य दृष्टान्तदार्ष्टान्तिकयोः साम्यश्रौव्यादित्याह—परिणामिनो हीति । दृष्टान्तगतं विवक्षितमंशं दार्ष्टान्तिके नाभ्युपेतव्योऽतिप्रसङ्गात् । अस्ति च परिणामित्वे ब्रह्मणो मानान्तरविरोधस्तस्य कौटस्थ्यश्रुतेरिति इति । श्रुतिद्वयानुरोधात्कूटस्थत्वपरिणामित्वे स्यातामित्याशङ्क्य युगपत्क्रमेण वेति विकल्प्याद्यं विरोधेन निरस्य शङ्कते—स्थितीति । कूटस्थस्य ब्रह्मणो न परिणामित्वमिति विशेषणान्न तस्य कदाचिदपि परिणामयोग्यता स्वरूपप्रच्युतिः

नहि कूटस्थस्य ब्रह्मणः स्थितिगतिवदनेकधर्माश्रयत्वं संभवति । कूटस्थं च नित्यं ब्रह्म सर्वविक्रियाप्रतिषेधादित्यवोचाम । नच यथा ब्रह्मण आत्मैकत्वदर्शनं मोक्षसाधनमेवं जगदाकारपरिणामित्वदर्शनमपि स्वतन्त्रमेव कस्मैचित्फलायाभिप्रेयते । प्रमाणाभावात् । कूटस्थब्रह्मात्मत्वविज्ञानादेव हि फलं दर्शयति शास्त्रम्—'स एष नेति नेत्यात्मा' इत्युपक्रम्य 'अभयं वै जनक प्राप्तोऽसि' (बृ० ४।२।४) इत्येवंजातीयकम् । तत्रैतत्सिद्धं भवति—ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौ सत्यां यत्तत्राफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि तद्ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते, फलवत्संनिधावफलं तदङ्गमितिवत् । नतु स्वतन्त्रं फलाय कल्प्यत इति । नहि परिणामवत्त्वविज्ञानात्परिणामवत्त्वमात्मनः फलं स्यादिति वक्तुं युक्तं, कूटस्थनित्यत्वान्मोक्षस्य । कूटस्थब्रह्मात्मवादिन एकत्वैकान्त्यादीशित्रीशितव्याभाव ईश्वरकारणप्रतिज्ञाविरोध इति चेत् । न । अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात्सर्वज्ञत्वस्य । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात्सर्वज्ञात्सर्वशक्तेरीश्वराज्जगज्जनिस्थितिप्रलया नाचेतनात्प्रधानादन्यस्माद्वेत्येषोऽर्थः प्रतिज्ञातः

---

रत्नप्रभाव्याख्या

स्वत्यागेनावस्थान्तरात्मकपरिणामायोगाच्छुक्तिरजतवद्विवर्त एव प्रपञ्च इति भावः । किंच निष्फलस्य जगतः फलवत्प्रपञ्चब्रह्मधीशेषत्वेनानुवादाच्च सत्यतेत्याह—**नच यथेत्यादिना** । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः परिणामित्वविज्ञानात्तत्प्राप्तिर्विदुषः फलमित्याशङ्क्याह—**नहि परिणामवत्त्वेति** । 'ब्रह्मविदाप्नोति परम्' इति कूटस्थनित्यमोक्षफलसंभवे दुःखानित्यपरिणामित्वफलकल्पनायोगादिति भावः । ननु पूर्वं 'जन्माद्यस्य यतः' इति ईश्वरणप्रतिज्ञा कृता । अधुना तदनन्यत्वमित्यन्ताभेदप्रतिपादने ईशित्रीशितव्यभेदाभावात्तद्विरोधः स्यादिति शङ्कते—**कूटे**ति । कल्पितद्वैतमपेक्ष्येश्वरत्वादिकं परमार्थतोऽनन्यत्वमित्यविरोधमाह—**नेत्यादिना** । अविद्यात्मके चिदात्मनि लीने रूपे एव बीजं तस्य व्याकरणं स्थूलात्मना सृष्टिस्तदपेक्षत्वादीश्वरत्वादेर्न विरोध इत्यर्थः । संगृहीतार्थं विवृणोति—**तस्मादि-**

भामतीव्याख्या

रूप्यते । नच धर्मिणो व्यतिरिच्यते धर्मो येन तदुपजनापायेऽपि धर्मी कूटस्थः स्यात् । भेद ऐकान्तिके गवाश्ववद्धर्मधर्मिभावान् । बाणादयस्तु परिणामिनः स्थित्या गत्या च परिणमन्त इति । अपि च स्वाध्यायाध्ययनविध्यापादितार्थवत्त्वस्य संदर्भेनापि वर्णेनानर्थकेन न भवितव्यं किं पुनरियता जगतो ब्रह्मयोनित्वप्रतिपादकेन वाक्यसंदर्भेण । तत्र फलवद्ब्रह्मदर्शनसंनिधावफलं जगद्योनित्वं समाम्नायमानं तदर्थं सत्तदुपायतयावतिष्ठते नार्थान्तरार्थमित्याह—**नच यथा ब्रह्मण इति** । न परिणामपरत्वमस्येत्यर्थः । तदनन्यत्वमित्यस्य सूत्रस्य प्रतिज्ञाविरोधं श्रुतिविरोधं च चोदयति—**कूटस्थब्रह्मात्मवा-** इति । परिहरति—**न । अविद्यात्मक इति** । नाम च रूपं च ते एव बीजं तस्य व्याकरणं कार्यप्रपञ्चस्तदपेक्षत्वादैश्वर्यस्य । भवति—न तात्त्विकमैश्वर्यं सर्वज्ञत्वं च ब्रह्मणः किंत्वविद्योपाधिकमिति तदाश्रयं प्रतिज्ञासूत्रं, तत्त्वाश्रयं तु तदनन्यत्वसूत्रम्, तेना-

आनन्दगिरीयव्याख्या

स्फुटयति—**नहीति** । परिणामिनां हि बाणपाषाणादीनां क्रमेण स्थितिगती युक्ते, ननु परिणामायोग्यस्य क्रमेण परिणामित्वे ब्रह्मणः स्यातामित्यर्थः । ब्रह्मणि विरुद्धधर्मासंभवे कूटस्थत्वं हित्वा परिणामित्वमेवेष्यतामित्याशङ्क्याह—**कूटस्थं चेति** । अननिर्वाच्यकूटस्थब्रह्मणः स्वरूपादप्रच्युतस्वभावस्य सर्वप्रकारतद्विपरीतकार्याकारपरिणामत्वानुपपत्त्या कार्यप्रपञ्चस्य स्वरूपादप्रच्युतं रजतादिपरिणामवन्मिथ्याविवर्तत्वं सिध्यतीत्युक्तम् । संप्रति परिणामश्रुतेः स्वार्थे फलाभावादपि परिणामो न विवक्षित इत्याह—ति । यद्ब्रह्मज्ञानस्य फलं तदेव परिणामिब्रह्मज्ञानस्यापि, शास्त्रमेव चात्र प्रमाणमित्याशङ्क्याह—**कूटस्थेति** । तर्हि परिणामिश्रुतीनां स्वाध्यायाध्ययनविधिविरोधः स्यादित्याशङ्क्य फलवच्छेषतया साफल्यान्मैवमित्याह—**तत्रेति** । सृष्ट्यादिश्रुतीनां स्वार्थे फलवैकल्ये दृष्टान्तम् । तत्र मीमांसकसंमतमुदाहरणमाह—**फलवदिति** । यथाहि स्वर्गादिफलवतो दर्शपूर्णमासादेः संनिधाने श्रुतं प्रयाजादि अफलं तदङ्गमित्यङ्गीक्रियते, तथा सृष्ट्यादिदर्शनमपि ब्रह्मज्ञानशेषतया तत्फलेनैव फलवत्त्वात्तदङ्गमित्यर्थः । ननु प्रयाजादेः श्रूयमाणफलत्वासंभवे फलवदङ्गत्वं किमित्यङ्गीकर्तव्यमित्याशङ्क्य प्रधानफलेनैव फलवत्त्वसिद्धौ फलान्तरकल्पने गौरवाद्ब्रह्मेषु च फलस्वाभाव्यादित्याह—**नत्विति** । इतिशब्दः सिद्धं भवतीत्यनेन संबध्यते । 'तं यथा यथोपासते तदेव भवति' इति श्रुत्या परिणामात्मत्वज्ञानात्तत्प्राप्तिरेव फलमित्याशङ्क्याह—**नहीति** । 'तस्य तावदेव' इत्यादिना प्रतिपन्नं कैवल्यं विहाय सामान्यशास्त्रसिद्धं संसारबन्धः स्यादिति भावः । कूटस्थाद्वयत्वे ब्रह्मणः श्रुतिप्रतिज्ञयोर्विरोधः स्यादिति शङ्कते—**कूटस्थेति** । विरोधद्वयं परिहरति—**नेत्यादिना** । अविद्यात्मके नामरूपे एव बीजं तस्य व्याकरणं कार्यप्रपञ्चस्तदपेक्षत्वादैश्वर्यस्य प्रतिज्ञासूत्रस्य तदनुसारिश्रुतेश्च पारमार्थिककूटस्थाद्वयत्वे न विरोधोऽस्तीत्यर्थः । संग्रहवाक्यं विवृणोति—**तस्मादित्यादिना** । उक्तमेवार्थं चोद्यपरिहा-

'जन्माद्यस्य यतः' (ब्र० सू० १।१।४) इति । सा प्रतिज्ञा तदवस्थैव न तद्विरुद्धोऽर्थः पु
च्यते । कथं नोच्यतेऽत्यन्तमात्मन एकत्वमद्वितीयत्वं च ब्रुवता । शृणु यथा नोच्यते । स
श्वरस्यात्मभूत इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्च
सर्वज्ञस्येश्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते । ताभ्यामन्यः सर्व
'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा० ८।१४।१) इति श्रु
मरूपे व्याकरवाणि' (छा० ६।३।२), 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभि
दास्ते' (तै० आ० ३।१२।७) 'एकं बीजं बहुधा यः करोति' (श्वे० ६।१२) इत्यादिश्रु
एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति, व्योमेव घटकरकाद्युपाध्यनुरोधि ।
स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातानु
जीवाख्यान्विज्ञानात्मनः प्रतीष्टे व्यवहारविषये । तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्ष
स्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च न परमार्थतो विद्ययापास्तसर्वोपाधिस्वरूप आत्मनि
शितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते । तथाचोक्तम्—'यत्र नान्यत्पश्यति नान्यच्छृणोति
द्विजानाति स भूमा' (छा० ७।२४।१) इति । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्
४।५।१५) इत्यादिना च । एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे

---

रत्नप्रभाव्याख्या

त्यादिना । **तत्वान्यत्वाभ्यामिति** । नामरूपयोरीश्वरत्वं वक्तुमशक्यं जडत्वात् । नापीश्वरादन्यत्वं कल्पितयो
र्त्योरभावादित्यर्थः । संस्कारात्मकनामरूपयोरविद्यैक्यविवक्षया ब्रूते—**मायेति** । नामरूपे चेदीश्वरस्य
जड इत्यत आह—**ताभ्यामन्य इति** । अन्यत्वे व्याकरणे च श्रुतिमाह—**आकाश इत्यादिना** ।
कल्पितभेदेन बिम्बस्थानस्येश्वरत्वं, प्रतिबिम्बभूतानां जीवानां नियम्यत्वमित्याह—**स च स्वात्मभूतानि**
नानाजीवा भाष्योक्ता इति भ्रमितव्यं, बुद्ध्यादिसंघातभेदेन भेदोक्तेः । अविद्याप्रतिबिम्बस्त्वेक एव जीव इ

आनन्दगिरीयव्याख्या

रान्यां स्फोरयति—**कथमित्यादिना** । नामरूपयोरात्मभूतत्वे वस्तुत्वशङ्कायामिवेत्युक्तमुपमार्थत्वमविकारस्य
यति—**अविद्येति** । तयोरविद्याकल्पितत्वं साधयति—**तत्त्वान्यत्वाभ्यामिति** । न हीश्वरत्वेन ते निरुच्येते,
नापि ततोऽन्यत्वेन निरुक्तिमर्हतः, स्वातन्त्र्येण सत्तास्फूर्त्यसंभवात् । नहि जडमजडानपेक्षं सत्तास्फूर्तिमदुपलभ्यते,
तस्मादविद्यात्मके नामरूपे इत्यर्थः । तयोश्च कार्यलिङ्गकमनुमानं प्रमाणयति—**संसारेति** । तयोराश्रयं विषयं
ज्ञस्येति । तयोरेव श्रुतिस्मृती प्रमाणयति—**मायेति** । 'मायां तु प्रकृतिं विद्यात्,' 'देवात्मशक्तिम्' इत्येवंविधा श्रुतिः ।
'माया ह्येषा' इत्येवंप्रकारा च स्मृतिः । नामरूपे चेदीश्वरात्मभूते तर्हि सोऽपि ताभ्यामभिन्नत्वात्तद्वदेव जडः
मिति । ईश्वरस्य नामरूपाभ्यामर्थान्तरत्वे प्रमाणमाह—**आकाश इति** । यत्तु नामरूपबीजव्याकरणापेक्षमैश्वर्यं
प्रमाणमाह—**नामरूपे इति** । जीवस्य व्याकर्तृत्वं व्यासेद्धुं वाक्यान्तरमुदाहरति—**सर्वाणीति** । नामरूप
सिद्ध्यर्थं श्रुत्यन्तरं पठति—**एकमिति** । आदिशब्देन 'सच्च त्यच्चाभवत्' इत्याद्या श्रुतिर्गृह्यते । दर्शितश्रुतिभ्यो
श्वरायत्तं सिद्धं तदपेक्षं चास्यैश्वर्यमित्यर्थः । स्वाभाविकत्वादैश्वर्यस्य कुतो व्याकरणापेक्षेत्याशङ्क्याह—**एवमिति** ।
धादविद्याकृते तदात्मके ये नामरूपे तद्रूपानवच्छिन्नोपाध्यभिव्यक्तश्चिदात्मा ताभ्यामेव नामरूपाभ्यां विरचितं
श्वरो नाम । ततो न स्वाभाविकमैश्वर्यमित्यर्थः । ईश्वरस्योपाध्यनुरोधित्वे दृष्टान्तमाह—**व्योमेति** ।
जीवानामतत्कृतत्वात्कुतस्तान्प्रत्यैश्वर्यमित्याशङ्क्याह—**स चेति** । स्वात्मभूतत्वे भेदाभावात्कुतो नियम्यत्वं
घटवदुपाधेरनधिगमे कथमौपाधिकभेदानुरोधेन नियम्यनियन्तृत्वं कल्प्यते, तत्राह—**अविद्येति** । ईश्वरस्येश्वरत्वं
यितुं विशिनष्टि—**व्यवहारेति** । कल्पितमीश्वरत्वमित्युपपादितं निगमयति—**तदेवमिति** । सर्वज्ञत्वादिष्वपि
ङ्क्याह—**सर्वज्ञत्वमिति** । सर्वज्ञत्वं चाविद्यात्मकोपाधिपरिच्छेदापेक्षमिति संबन्धः । पूर्वत्रोक्तेन प्रकारेणाविद्या
कृतो यो जीवप्रपञ्चाख्यः परिच्छेदस्तदपेक्षमिति यावत् । अन्वयमुखेनोक्तमर्थं व्यतिरेकद्वारा निरूपयति—**नेत्यादि**
ज्ञातोरीश्वरत्वानुपपत्तौ श्रुतिं प्रमाणयति—**तथाचेति** । ननु परमार्थावस्थायां दर्शनादिव्यवहाररहितत्वमिहोक्तं
व्यादिव्यवहारासत्त्वमित्याशङ्क्य दर्शनादिव्यवहाराभावस्योपलक्षणत्वादत्र समस्तव्यवहारराहित्यं विवक्षितमित्याह—
नं 'स एष नेति नेत्यात्मा' 'अदृश्येऽनात्म्ये' 'यत्तदद्रेश्यम्' 'अस्थूलम्' इत्यादिवाक्यसंग्रहार्थम् । श्रौतेऽर्थे
**तथेति** । वेदान्तेष्विव भगवद्गीतास्वपि परमार्थावस्थायां व्यवहाराभावः प्रदर्श्यत इति संबन्धः । कथं तर्हि

श्वरगीतास्वपि—'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥' (गी० ५।१४-१५) इति परमार्थावस्थायामीशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते । व्यवहारावस्थायां तूक्तः श्रुतावपीश्वरादिव्यवहारः 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' (बृ० ४।४।२२) इति । तथाचेश्वरगीतास्वपि—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥' (१८।६१) इति । सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह । व्यवहाराभिप्रायेण तु स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति । अप्रत्याख्यायैव कार्यप्रपञ्चं, परिणामप्रक्रियां चाश्रयति सगुणेषूपासनेषूपयोक्ष्यत इति ॥ १४ ॥

## भावे चोपलब्धेः ॥ १५ ॥

इतश्च कारणादनन्यत्वं कार्यस्य, यत्कारणं भाव एव कारणस्य कार्यमुपलभ्यते नाभावे । तद्यथा सत्यां मृदि घट उपलभ्यते, सत्सु च तन्तुषु पटः । नच नियमेनान्यभावेऽन्यस्योपलब्धिर्दृष्टा । नह्यश्वो गोरन्यः सन् गोर्भाव एवोपलभ्यते । नच कुलालभाव एव घट उपलभ्यते । सत्यपि

---

रत्नप्रभाव्याख्या

सत्वादिद्वैताभावे श्रुतिमाह—**तथा चेति** । कथं तर्हि कर्तृत्वादिकमित्यत आह—**स्वभावस्त्विति** । अनाद्यविद्यैव कर्तृरूपेण प्रवर्तत इत्यर्थः । भक्ताभक्तयोः पापसुकृतनाशकत्वादीश्वरस्य वास्तवमीश्वरत्वमित्यत आह—**नादत्त इति** । हरतीत्यर्थः । तेन स्वरूपज्ञानावरणेन कर्ताहमीश्वरो मे नियन्तेत्येवं भ्रमन्ति । उक्तार्थः सूत्रकारसंमत इत्याह—**सूत्रकारोऽपीति** । न केवलं लौकिकव्यवहारार्थं परिणामप्रक्रियाश्रयणं किंतूपासनार्थं चेत्याह—**परिणामप्रक्रियां चेति** । ...म्—'कृपणधीः परिणाममुदीक्षते क्षयितकल्मषधीस्तु विवर्तताम्' इति ॥ १४ ॥ एवं तदनन्यत्वे प्रत्यक्षादिविरोधं परि... अनुमानमाह—**भावे चेति** । कारणस्य भावे सत्त्वे उपलब्धौ च कार्यस्य सत्त्वादुपलब्धेश्चानन्यत्वमिति सूत्रार्थः । घटो ...न्यः, मृत्सत्त्वोपलब्धिक्षणनियतसत्त्वोपलब्धिमत्त्वात्, मृद्वत् । अन्यत्वेऽप्ययं हेतुः किं न स्यादित्यप्रयोजकत्वमाशङ्क्य ...ति—**नचेति** । मृद्घटयोरन्यत्वे गवाश्वयोरिव हेतूच्छित्तिः स्यादित्यर्थः । गवाश्वयोर्निमित्तनैमित्तिकत्वाभावाद्धेत्वभावः । मृद्घटयोस्तेन हेतुना निमित्तादिभावः सिध्यति नानन्यत्वमित्यर्थान्तरतामाशङ्क्याह—**नच कुलालेति** । न चोपादानो-

भामतीव्याख्या

...। सुगममन्यत् ॥ १४ ॥ **भावे चोपलब्धेः** । कारणस्य भावः सत्ता चोपलम्भश्च तस्मिन् कार्यस्योपलब्धेर्भावाच्च । ...भवति—विषयपदं विषयविषयिपरं, विषयिपदमपि विषयिविषयपरं, तेन कारणोपलम्भभावयोरुपादेयोपलम्भभावा- ...सूत्रार्थः संपद्यते । तथा च प्रभारूपानुविद्धबुद्धिबोध्येन चाक्षुषेण न व्यभिचारः, नापि वह्निभावाभावानुविधायिभावाभावेन धूम- ...ति सिद्धं भवति । तत्र यथोक्तहेतोरेकदेशाभिधानेनोपक्रमते भाष्यकारः—**इतश्च कारणादनन्यत्वं** भेदाभावः **कार्यस्य,** ...कारणं यस्मात्कारणात् **भाव एव कारणस्येति** । अस्य व्यतिरेकमुखेन गमकत्वमाह—**नच नियमेनेति** । काकता-

आनन्दगिरीयव्याख्या

...नाह—**स्वभावस्त्विति** । अनाद्यविद्याख्यशक्तिक्रियाकारकादिप्रवृत्तिरित्यर्थः । तथापि भक्तानितरांश्चानुगृह्णन्निगृह्णंश्च तदीयसुकृत- ...परमेश्वरो वस्तुतो नाशयतीत्याशङ्क्याह—**नादत्त इति** । सर्वेषां परमात्मैक्यं कुतः सुकृतदुष्कृतयोर्विभागेन प्रवृत्तिरित्यत- ...**अज्ञानेनेति** । ऐश्वर्यादेर्वस्तुतोऽनुपपत्तिमुक्त्वा कल्पनयोपपत्तौ श्रुतिस्मृती क्रमेणोदाहरति—**व्यवहारेति** । श्रुताविवेश्वरगी- ...व्यवहारावस्थायामीश्वरादिव्यवहार उक्त इति संबन्धः । परमार्थावस्थायां सर्वव्यवहाराभावे सूत्रकारस्यापि संमतिमाह— ...। 'तदनन्यत्वम्' इत्यनेनायुक्तं कार्यमिथ्यात्वं कथ्यते, 'स्याल्लोकवत्' इति पूर्वसूत्रे तत्सत्यत्ववचनादित्याशङ्क्याह—**व्यवहा-** ...सूत्रेः परिणामाम्' 'क्षीरवद्धि' इत्यादिना परिणामोक्तेरेष्टव्यं कार्यप्रपञ्चस्य सत्यत्वमित्याशङ्क्यान्यार्थत्वात्परिणामवादस्य न तद्वि- —**परिणामेति** ॥ १४ ॥ तदनन्यत्वमित्यस्य श्रुत्यादिविरोधः समाहितः । संप्रति तदनन्यत्वे मानमनुमानमाह—**भावे चेति** । ...भावे च कार्यस्य भावाज्ज्ञानाच्च तस्य कारणादनन्यत्वमित्यर्थः । विमतं कारणानतिरिक्तं, तद्भावभानानियतभावभानत्वात्, ...अनुमानं सूत्रयोजनया दर्शयितुं चकारार्थमाह—**इतश्चेति** । इतःशब्दार्थं स्फुटयन्नवशिष्टं व्याचष्टे—**यत्कारणमिति** । ...दृष्टान्तया द्रढयति—**तद्यथेति** । सत्यपि घटे पटोपलब्धिदर्शनात्कारणभावे कार्योपलब्धिर्नाभेदसाधनमित्याशङ्क्याह—**नचेति** । ...अन्यस्योपलब्धिरनियतेत्यत्र दृष्टान्तमाह—**नहीति** । ननु गवाश्वयोरकार्यकारणत्वादनियतोपलम्भेऽपि कार्यकारणयोरन- ...कार्यकारणत्वहन्ता नियतोपलब्धिरित्याशङ्क्याह—**नचेति** । नियमेनोपलम्भेऽपि नानन्यत्वमिति व्यभिचारं शङ्कते—

**कार्यत्वं घटादिवत्प्राप्नोति । न । 'आत्मन आकाशः संभूतः' (तै० २।१) इति श्रुतेः । यदि ह्यात्मा ... कारः स्यात्तस्मात्परमन्यन्न श्रुतमित्याकाशादि सर्वं कार्यं निरात्मकमात्मनः कार्यत्वे स्यात् । शून्यवादः प्रसज्येत । आत्मत्वाच्चात्मनो निराकरणशङ्कानुपपत्तिः । नह्यात्मागन्तुकः ... स्वयंसिद्धत्वात् । नह्यात्मात्मनः प्रमाणमपेक्ष्य सिध्यति । तस्य हि प्रत्यक्षादीनि प्र... सिद्धप्रमेयसिद्धय उपादीयन्ते । न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयंसिद्धाः केन... चिदभ्युपगम्यन्ते । आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात्प्रागेव प्रमाणादिव्यवहारात्सिध्यति । नचेदृशस्य निराकरणं संभवति । आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम् । य एव ...**

---

रत्नप्रभाव्याख्या

कल्पितत्वेन भिन्नसत्ताकत्वान्न व्यभिचार इत्याह—**नेति** । अत्र चाज्ञानान्यद्रव्यत्वं विशेषणम्, अतो नाज्ञाने व्यभि... चारः । नन्वात्मा कार्यः, विभक्तत्वात्, वस्तुत्वाद्वा, घटवदित्याभासतुल्यमिदमनुमानमित्याशङ्क्यात्मनः ... कार्यत्वे शून्यताप्रसङ्ग इति बाधकसत्त्वात्तस्याभासत्वं, नात्र किंचिद्बाधकमस्ति प्रत्युत आकाशस्याकार्यत्वे ... श्रौतप्रतिज्ञाहान्यादयो बाधकाः सन्तीति नाभासतुल्यतेत्याह—**आत्मन इति** । इष्टप्रसङ्ग इति वदन्तं प्रत्याह—... **दिति** । आत्माभावः केनचिज्ज्ञायते न वा । आद्ये यो ज्ञाता स परिशिष्यत इति न शून्यता । द्वितीयेऽपि न ... वादित्यर्थः । किंच यद्धि कार्यं सत्तास्फूर्त्योरन्यापेक्षं तन्निराकार्यम्, आत्मा त्वकार्यो निरपेक्षत्वान्न बाध्यत इत्याह— ... **त्यादिना** । कस्यचित्कारणस्यागन्तुकः कार्यो न हि । सत्तास्फूर्त्योरनन्यायत्तत्वादित्यक्षरार्थः । तत्र ... विवृणोति—**नहीति** । तदुक्तं सुरेश्वराचार्यैः—'प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा । यस्य प्रसादात्सिध्यन्ति तत्सिद्धौ किमपेक्ष्यते ।' इति । तथा श्रुतिराह—'पुरुषः स्वयं ज्योतिः,' 'तस्य भासा सर्वमिदं विभाति' इति च । ननु ... प्रमाणवैयर्थ्यं, तत्राह—**तस्येति** । ननु प्रमेयस्यापि स्वप्रकाशत्वं किं न स्यादित्यत आह—**नहीति** । ... मिति भावः । आत्मापि मानाधीनसिद्धिकः किं न स्यादित्यत आह—**आत्मा त्विति** । अयमर्थः—... प्रमेयसत्तानिश्चायकं, गेहे घटो दृष्टो न वेति ज्ञानसंशये न दृष्ट इति व्यतिरेकनिश्चये चार्थस्वरूपानिश्चयात् । ... स्वतः, कार्यस्य स्वप्रकाशत्वायोगात् । नापि ज्ञानान्तरात्, अनवस्थानात् । अतः साक्षिणैव ज्ञानसत्तानिश्चयो वाच्यः । ... ज्ज्ञानाधीनसत्तानिश्चय अन्योन्याश्रयः स्यात् । अतः सर्वसाधकत्वादात्मा स्वतःसिद्ध इति । स्वप्रकाशस्यापि ... स्यादित्यत आह—**नचेति** । जडं हि परायत्तप्रकाशत्वादागन्तुकं बाधयोग्यं न प्रकाशात्मस्वरूपं, तस्य सर्वदा ...

भामतीव्याख्या

त्त्वात्, घटशरावोदञ्चनादिवदिति । **सर्वं कार्यं निरात्मकमिति** । निरुपादानं स्यादित्यर्थः । शून्यवाद ... श्रुत्योपन्यस्य 'कथमसतः सज्जायेत' इति । उपपादितं च तन्निराकरणमधस्तादिति । आत्मत्वादेवात्मनः प्रत्याख्यानो निराकरणानु**पपत्तिः** । एतदुक्तं भवति—सोपादानं चेत्कार्यं तत आत्मैवोपादानमुक्तं, तस्यैवोपादानत्वेन श्रुतेरुपादानान्तरस्य ... स्यादेतत् । अस्त्वात्मोपादानमस्य जगतः, तस्य तूपादानान्तरमश्रूयमाणमप्यन्यद्भविष्यतीत्यत आह—**नह्यात्मा**... **चित्** उपादानान्तरस्योपादेयः । कुतः । **स्वयंसिद्धत्वात्** । सत्ता वा प्रकाशो वास्य स्वयंसिद्धो । तत्र ... स्तावदनागन्तुकत्वमाह—**नह्यात्मात्मन इति** । उपपादितमेतद्यथा संशयविपर्यासपारोक्ष्यानास्पदत्वात्... काशः तदधीनप्रकाशास्तु प्रमाणादयः । अत एव श्रुतिः—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ... **शस्य निराकरणं संभवतीति** । निराकरणमपि हि तदधीनात्मलाभं तद्विरुद्धं नोदेतुमर्हतीत्यर्थः । ...

आनन्दगिरीयव्याख्या

प्रेत्याह—**न । आत्मन इति** । आत्मनोऽपि वस्तुत्वाद्घटवत्कार्यत्वानुमानान्न सर्वकारणतेत्याशङ्क्यार्थापत्तिविरोधाद्... निरात्मकत्वं निरुपादानत्वम् । तत्रानिष्टफलमाह—**तथाचेति** । इष्टापत्तिं निराचष्टे—**आत्मत्वाच्चेति** । निराकर्तैवात्मेत्यात्मनो नित्यसत्त्वम् । द्वितीये तदभावे निराकरणासिद्धेर्नित्यत्वमित्यर्थः । आत्मकारणत्वे ... निरात्मकत्वमित्याशङ्क्याह—**नहीति** । सत्तास्फूर्त्योरन्यानपेक्षत्वादात्मनोऽनागन्तुकत्वं, तत्कथं तत्कारणं ... प्रमाणापेक्षया सिध्यन्नात्मा कथं निरपेक्षस्फूर्तिरित्याशङ्क्याह—**नहीति** । तस्यापि स्वयमेव साधकत्वादित्यर्थः । ... सिद्धत्वे तेषामानर्थक्यमित्याशङ्क्याह—**तस्य हीति** । आत्मनः स्वयंसिद्धत्वे वस्तुत्वाविशेषादाकाशादीनामपि ... यर्थ्यतादवस्थ्यमित्याशङ्क्याह—**नहीति** । जडत्वादनभ्युपगमाच्च न स्वतःसिद्धता तेषामित्यर्थः । आत्मनोऽपि ... नोपगच्छन्तीत्याशङ्क्याह—**आत्मा त्विति** । प्रमाणादिसाक्षित्वान्न तदधीनात्मसिद्धिरित्यर्थः । आत्मनः स्वरूपं ... रणमित्याशङ्क्याह—**नचेति** । निराकरणत्वमपि तदधीनात्मलाभं तद्विरुद्धं नोदेतीत्यर्थः । अहमस्मि अहं नास्मीति निराकरणानि... चेत्यात्मनोऽपि निराकरणं दृष्टमित्याशङ्क्याह—**आगन्तुकं हीति** । जीवत्वमनागन्तुकमपि निराक्रियमाणमि...

राकर्ता तदेव तस्य स्वरूपम् । न ह्यग्नेरौष्ण्यमग्निना निराक्रियते । तथाहमेवेदानीं जानामि वर्तमानं वस्त्वहमेवातीतमतीततरं चाज्ञासिपमहमेवानागतमनागततरं च ज्ञास्यामीत्यतीतानागतवर्तमानभावेनाऽन्यथाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति, सर्वदा वर्तमानस्वभावत्वात् । तथा भस्मीभवत्यपि देहे नात्मन उच्छेदो वर्तमानस्वभावादन्यस्वभावत्वं वा न संभावयितुं शक्यम् । एवमप्रत्याख्येयस्वभावत्वादकार्यत्वमात्मनः कार्यत्वं चाकाशस्य । यत्तूक्तं समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति, तत्प्रत्युच्यते—न तावत्समानजातीयमेवारभते न भिन्नजातीयमिति नियमोऽस्ति । नहि तन्तूनां तत्संयोगानां च समानजातीयत्वमस्ति, द्रव्यगुणत्वाभ्युपगमात् । नच निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति । स्यादेतत् । समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो न कारणान्तरविषय इति । तदप्यनैकान्तिकम् । सूत्रगोवालैर्ह्यनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते । तथा सूत्रैरूर्णादि-

रत्नप्रभाव्याख्या

राकर्त्रन्तराभावात्, स्वस्य च स्वनिराकर्तृत्वायोगात् । नहि सुनिपुणेनापि स्वाभावो द्रष्टुं शक्यत इत्यर्थः । एवं स्वतःस्फुरणादात्मा न बाध्य इत्युक्त्वा स्वतःसत्ताकत्वाच्च न बाध्य इत्याह—तथाहमेवेति । ज्ञानज्ञेययोः सत्ताव्यभिचारेऽपि ज्ञातुः स्वरूपत्वान्न सत्ताव्यभिचार इत्यर्थः । मास्तु जीवतो ज्ञातुरन्यथास्वभावः, मृतस्य तु स्यादित्यत आह—तथेति । उच्छेदो नाशः । अन्यथास्वभावत्वं मिथ्यात्वं वा संभावयितुमपि न शक्यम्, अहमस्मीत्यनुभवसिद्धसत्स्वभावस्य बाधकाभावादित्यर्थः । आत्मनः शून्यत्वनिरासेन शून्यताप्रसङ्गस्यानिष्टत्वमुक्तं, ततश्चात्मनः कार्यत्वानुमानमाभास इत्याह—एवमिति । अकार्यात्मनः सिद्धौ तस्याविद्यासहितस्योपादानस्यादृष्टादिनिमित्तस्य च सत्त्वादाकाशानुत्पत्तिहेतोः सामग्रीशून्यत्वस्य स्वरूपासिद्धेः सत्प्रतिपक्षबाधाच्चाकाशस्य कार्यत्वं निरवद्यमित्याह—कार्यत्वं चेति । आत्मावियोर्विजातीयत्वाभाकाशारम्भकत्वमित्यनूद्य निरस्यति—यत्त्वित्यादिना । किं कारणमात्रस्य साजात्यनियम उत समवायिनः । तत्राद्यं निरस्य द्वितीयं शङ्कते—स्यादेतदिति । किं समवायितावच्छेदकधर्मेण साजात्यमुत सत्त्वादिना । नाद्य इत्याह—तदपीति । नच रज्ज्वादि

भामतीव्याख्या

इ—तथाहमेवेदानीं जानामीति । प्रमाप्रमाणप्रमेयाणां वर्तमानातीतानागतत्वेऽपि प्रमातुः सदा वर्तमानत्वेनानुभवादप्रच्युतस्य नागन्तुकं सत्त्वम् । त्रैकाल्यानवच्छेदेन ह्यागन्तुकत्वं व्याप्तं, तत्प्रमातुः सदा वर्तमानाद्व्यावर्तमानमागन्तुकत्वं स्वव्याप्यमानिवर्तत इति । अन्यथाभवत्यपि ज्ञातव्य इति । प्रकृतिप्रत्ययाभ्यां ज्ञानज्ञेययोरन्यथाभावो दर्शितः । ननु जीवतः पुंसो मृदन्यथाभावो मृतस्य तु भविष्यतीत्यत आह—तथा भस्मीभवत्यपीति । यत्खलु सत्स्वभावमनुभवसिद्धं तस्यानिर्वचनमन्यतो बाधकादवसातव्यम् । बाधकं च घटादीनां स्वभावाद्विचलनं प्रमाणोपनीतम् । यस्य तु न तदस्त्यात्मनो न तस्य तत्कल्पनम्, अबाधितानुभवसिद्धस्य सत्स्वभावस्यानिर्वचनीयत्वकल्पनाप्रमाणाभावात् । तदिदमुक्तम्—न संभावयितुं शक्यमिति । तदनेन प्रबन्धेन प्रत्यनुमानेनाकाशानुत्पत्त्यनुमानं दूषयित्वानैकान्तिकत्वेनापि दूषयति—यत्तूक्तं समानजातीयमिति ।

आनन्दगिरीयव्याख्या

नेदं स्वरूपं, तदाह—य एवेति । तदपि निराक्रियतामित्याशङ्क्य निराकर्त्रन्तराभावान्नैवमित्याह—नहीति । आत्मनः सत्तायामन्यानपेक्षत्वमनागन्तुकत्वे कारणमुक्त्वा स्फूर्तावन्यानपेक्षत्वमुपपाद्य सत्तायामपि तदुपपादयति—तथेति । सदाहमित्यपरोक्षानुभवादात्मनः सत्ताव्यभिचारः, येनान्यतः सत्तामाकाङ्क्षेदित्यर्थः । जीवतो ज्ञातुरन्यथाभावाभावेऽपि मृतस्य स्यादित्याशङ्क्याह—तथादिना । सत्स्वभावत्वमनुभवसिद्धं तस्यान्यथात्वं बाधकादवसातव्यं, बाधकं च घटादीनां स्वभावाद्विचलनं मानोपनीतं, यस्य तु नेदं तस्यात्मनोऽनुभवसिद्धस्य नान्यथात्वमिति भावः । आत्मनः स्वतःसिद्धत्वेनानागन्तुकत्वं फलितमाह—एवमिति । विभक्तत्वव्यभिचारेऽपि बाधकतर्काभावादप्रयोजकतेत्याशङ्क्याह—कार्यत्वं चेति । अकार्यस्यात्मनः स्वरूपोपाधावबाधितभेदशून्यत्वान्न विभक्तत्वम् । आकाशस्य तथाविधभेदवत्त्वान्मुख्यविभागित्वेन कार्यत्वमन्यथा मुख्यविभागानुपपत्तिरिति कुतोऽप्रयोजकतेत्यर्थः । तत्रानुत्पत्त्यनुमानानां प्रत्यनुमानविरोधमुक्त्वा समवायिकारणशून्यत्वं विशेषतो दूषयितुमनुभाषते—यत्त्विति । तत्र समानजातीयारम्भकत्वमयोगव्यवच्छेदेनान्ययोगव्यवच्छेदेन वेति विकल्प्याद्यमङ्गीकृत्य द्वितीयं दूषयति—तत्प्रतीति । नियमो हि कारणमात्रे वा निमित्तकारणनिष्ठो वा समवायिकारणनिष्ठो वेति विकल्प्याद्यं प्रत्याह—नहीति । न द्वितीय इत्याह—नचेति । तृतीयं शङ्कते—स्यादेतदिति । समवायिकारणस्यापरजात्या वा परजात्या वा समानजातीयत्वमिति विकल्प्याद्यं निरस्यति—तदपीति । अनैकान्तिकत्वमाह—तथेति । नच रज्ज्वादेः सूत्रबालादिसमुदायमात्रत्वं, पटादेरपि तथात्वापत्तावयविसमुदायमात्रापाकरणप्रसङ्गात् । द्वितीये समानजातीयविशेषणवैयर्थ्यम्, अद्रव्यत्वामतश्चानारम्भकत्वेन सर्वस्यापि समानजातीयत्वसंभवादित्याह—

भिश्च विचित्रान्कम्बलान्वितन्वते । सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमानेऽ-
यमानर्थक्यं, सर्वस्य सर्वेण समानजातीयकत्वात् । नाप्यनेकमेवारभते नैकमिति नियमः,
अणुमनसोराद्यकर्मारम्भाभ्युपगमात् । एकैको हि परमाणुर्मनश्चाद्यं कर्मारभते न द्रव्यान्तरैः
संहत्येत्यभ्युपगम्यते । द्रव्यारम्भ एवानेकारम्भकत्वनियम इति चेत् । न । परिणामाभ्युपगमात् ।
भवेदेष नियमो यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत । तदेव तु द्रव्यं
विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्युपगम्यते । तच्च क्वचिदनेकं परिणमते मृद्बीजाद्य-
ङ्कुरादिभावेन । क्वचिदेकं परिणमते क्षीरादि दध्यादिभावेन । नेश्वरशासनमस्त्यनेकमेव कारणं
कार्यं जनयतीति । अतः श्रुतिप्रामाण्यादेकस्माद्ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जा-
तमिति निश्चीयते । तथाचोक्तम्—'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र० सू० २।१।२४)
इति । यच्चोक्तमाकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यत इति । तदयुक्तम् ।
येनैव हि विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभः स्वरूपवदिदानीमध्यवसीयते स एव
विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते । यथा च ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभा-
ववत्, 'अस्थूलमनणु' (बृ० ३।८।८) इत्यादिश्रुतिभ्यः, एवमाकाशस्वभावेनापि न स्वभाव-

## रत्नप्रभाव्याख्या

न द्रव्यान्तरमिति वाच्यं, पटादेरपि तथात्वापातात् । द्वितीयोऽस्मदिष्टः, आत्माविद्ययोर्वस्तुत्वेन साजात्याद्‌वि-
उपादानस्य साजात्यनियमं निरस्य संयुक्तानेकत्वनियममद्वितीयस्यासङ्गस्याप्यात्मन उपादानत्वसिद्धये निरस्य-
दिना । किमारम्भकमात्रस्यायं नियम उत द्रव्यारम्भकस्य । नाद्य इत्याह—अण्विति । द्व्यणुकस्य
कारणसंयोगजनकमाद्यं कर्म । यद्यप्यदृष्टवदात्मसंयुक्ते अणुमनसी आद्यकर्मारम्भके तथापि कर्मसमवायि
मभङ्ग इत्याह—एकैको हीति । द्रव्यान्तरैः । समवायिभिरित्यर्थः । द्वितीयमुत्थाप्यारम्भवादानङ्गीका-
द्रव्येत्यादिना । न त्वभ्युपगम्यते तस्मान्नैष नियम इति शेषः । यत्तु क्षीरपरमाणुषु रसान्तरोत्पत्तौ
तन्न । क्षीरनाशे मानाभावात्, रसवद्दध्नोऽप्येकद्रव्यारभ्यत्वसंभवाच्च, द्रव्यगुणसंकेतस्य पौरुषेयस्य
भावः । लोके कर्तुः सहायदर्शनादसहायाद्ब्रह्मणः कथं सर्ग इति, तत्राह—तथाचोक्तमिति ।
सिद्ध इत्याह—यच्चोक्तमित्यादिना । शब्दाश्रयत्वं विशेषः । शब्दादिमानाकाशः प्रलये नास्ति,
श्रुतेः । नन्वाकाशाभावे काठिन्यं स्यादिति चेत् । सुशिक्षितोऽयं नैयायिकतनयः । न ह्याकाशाभावत्वं
मूर्तद्रव्यविशेषस्तत्संयोगविशेषो वा काठिन्यं, तच्च प्रलये नास्तीति भावः । 'आकाशशरीरं ब्रह्म' इति श्रुतेः
वस्याकाशस्य सति ब्रह्मणि कथमभावः, तत्राह—यथाचेति । विभुत्वादाकाशसमं ब्रह्मेति श्रुत्यर्थः ।

## भामतीव्याख्या

नाप्यनेकमेवोपादानमुपादेयमारभते । यत्र हि क्षीरं दधिभावेन परिणमते तत्र नावयवानामनेकेषां

## आनन्दगिरीयव्याख्या

सत्त्वेति । समानजातीयमेवारम्भकमिति नियमं निराकृत्यानेकेषामारम्भकत्वनियमं निराकरोति—नापीति ।
रम्भे वा द्रव्यारम्भे वा । नाद्य इत्याह—अणुमनसोरिति । ययोः संयोगस्तौ संहत्य कर्मारभेते चेत्तत्रोक्तं
एतिरित्याशङ्क्य सति कर्मणि संयोगः सति च तस्मिन्कर्मेति परस्पराश्रयत्वान्नैवमित्याह—एकैको हीति ।
वायिकारणमात्ममनःसंयोगजनकं च कर्माद्यं कर्म । द्वितीयमवलम्बते—द्रव्येति । आरम्भवादानभ्युपगमेन
तदेव प्रपञ्चयति—भवेदिति । न त्वेवमभ्युपगम्यते । तस्मान्नैष नियम इति शेषः । तदनभ्युपगमे कथं
तदेवेति । परिणामपक्षेऽपि तुल्यमनेकेषां कारणत्वमित्याशङ्क्याह—तच्चेति । यत्र क्षीरं दधिभावेन परिणमते
पामुपादानत्वम्, अविभक्तस्यैव क्षीरस्य दध्यात्मना परिणामोपलम्भात्, यथा परमाणुवादिनां क्षीरव्यणुके
गेऽपि दधि जनयति तथा परिणामपक्षेऽपीति विवक्षन्नाह—क्वचिदिति । पक्षद्वयेऽपि कारणत्वमनेकेषामिति
त्याह—नेश्वरेति । एकस्मादनेकस्माच्च कार्योत्पत्तिदर्शनान्निर्णयासिद्धिरित्याशङ्क्याह—अत इति । एकस्मा-
क्षादर्शनात्तद्विरहिणो ब्रह्मणो, जगत्कारणत्वमयुक्तमित्याशङ्क्याह—तथाचेति । कारणशून्यत्वादाकाशमात्मवत्
इदानीमभूत्वाभावित्वाभावान्न तदुत्पत्तिमदित्युक्तमनुवदति—यच्चोक्तमिति । हेत्वसिद्ध्या परिहरति—तदयुक्तमिति ।
विशेषः । आकाशस्य मूर्ताभावान्मूर्तविरोधिनश्चार्थान्तरत्वात्तदभावेऽपि न प्रागवस्थायां काठिन्यप्रसक्तिरिति ।
ब्रह्म' इति श्रुतेराकाशाभावे कथं ब्रह्मणोऽनवस्थानमित्याशङ्क्याकाशवच्छरीरमस्येति व्युत्पत्त्या श्रुत्युपपत्तिं
अवकाशान्तरमन्तरेणाकाशस्थितिवद्ब्रह्मणोऽपि तत्कारणस्य तदतिरेकेण सुषुप्त्यवस्थायामिवावस्थितिरविरुद्धा

काशमिति श्रुतेरवगम्यते । तस्मात्प्रागुत्पत्तेरनाकाशमिति स्थितम् । यदप्युक्तं पृथिव्यादिवैध-र्म्यादाकाशस्याजत्वमिति । तदप्यसत् । श्रुतिविरोधे सत्युत्पत्त्यसंभवानुमानस्याभासत्वोप-पत्तेः । उत्पत्त्यनुमानस्य च दर्शितत्वात् । अनित्यमाकाशमनित्यगुणाश्रयत्वाद्घटादिवदित्यादि-प्रयोगसंभवाच्च । आत्मन्यनैकान्तिकमिति चेत् । न । तस्यौपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः । विभुत्वादीनां चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात् । यच्चोक्तमेतच्छब्दाच्चेति, तत्रामृतत्वश्रु-तिस्तावद्वियत्यमृता दिवौकस इतिवद्द्रष्टव्या । उत्पत्तिप्रलययोरुपपादितत्वात् । 'आकाशवत्स-र्वगतश्च नित्यः' इत्यपि प्रसिद्धमहत्त्वेनाकाशोपमानं क्रियते निरतिशयमहत्त्वाय नाकाशसम-त्वाय । यथेषुरिव सविता धावतीति क्षिप्रगतित्वायोच्यते नेषुतुल्यगतित्वाय तद्वत् । एतेनान-न्तत्वोपमानश्रुतिर्व्याख्याता । 'ज्यायानाकाशात्' इत्यादिश्रुतिभ्यश्च ब्रह्मण आकाशस्योनपरि-माणत्वसिद्धिः । 'न तस्य प्रतिमास्ति' (श्वे० ४।१९) इति च ब्रह्मणोऽनुपमानत्वं दर्शयति । 'अतोऽन्यदार्तम्' (बृ० ३।४।२) इति च ब्रह्मणोऽन्येषामाकाशादीनामार्तत्वं दर्शयति । तपसि ब्रह्मशब्दवदाकाशस्य जन्मश्रुतेर्गौणत्वमित्येतदाकाशसंभवश्रुत्यनुमानाभ्यां परिहृतम् । तस्मा-द्ब्रह्मकार्यं वियदिति सिद्धम् ॥ ७ ॥

---

रत्नप्रभाव्याख्या

[सा]वयवद्रव्यत्वलिङ्गानां विभक्तत्वादिलिङ्गसहितागमबाधमाह—**यदपीत्यादिना** । धर्मिविकाराभावे गुणनाशो न स्यादिति तर्का-[नु]कूलपदम् । गुणाश्रयत्वमेव हेतुः । तच्च स्वसमानसत्ताकगुणवत्त्वम्, अतो निर्गुणात्मनि न व्यभिचारः । भूतत्वमादिशब्दार्थः । [हेत्व]सिद्धिमप्याह—**विभुत्वादीनां चेति** । सर्वमूर्तद्रव्यसंयोगः परिमाणविशेषो वा विभुत्वं निर्गुणात्मनि दृष्टान्ते नास्ति । सं-[प्रति] सावयवत्वानियतस्याजत्वसाध्यविरुद्धता च । स्वल्पोपचयरूपं तु विभुत्वमात्माकाशयोर्न समं, 'ज्यायानाकाशात्' इति [श्रु]तेः । क्वचिदाकाशसाम्यं तु ब्रह्मणो यत्किंचिद्धर्मसंबन्धेन व्यपदिश्यते । असक्तत्वेन वा । पञ्चीकरणादस्पर्शत्वमसिद्धं, कार्य-[त्वा]न्निरवयवत्वमप्यसिद्धं, द्रव्यत्वजातिश्चात्मन्यसिद्धेत्यर्थः । नित्य इत्यंशेन साम्यं न विवक्षितम् । ननु 'स यथाऽनन्तो-ऽयमाकाश एवमनन्त आत्मा' इति श्रुतिर्नित्यत्वेनैव साम्यं ब्रूते, नेत्याह—**एतेनेति** । आकाशस्य कार्यत्वेनानित्यत्वादित्यर्थः । [आ]त्मापेक्षिकानन्त्यद्वारा मुख्यानन्त्यं बोधयतीति भावः । न्यूनत्वाच्चाकाशस्य न मुख्योपमानत्वमित्याह—**ज्यायानिति** । [ब्रह्मण उ]पमानासत्त्वे श्रुतिः—'न तस्य' इति । तस्मादाकाशस्योपमानत्वमात्रेण नित्यत्वं नास्तीति भावः । अनित्यत्वेनासत्त्वे श्रुतिमा-[ह]—**अतोऽन्यदिति** । यत्त्वेकस्यैव संभूतशब्दस्य गौणत्वं मुख्यत्वं चेति । तन्न । आकाशेऽपि तस्य मुख्यत्वसंभवादित्याह—[तप]सीति । वल्वत्तित्तिरिश्रुत्या छान्दोग्यश्रुतेर्नयनादेकवाक्यतया स्रष्टरि ब्रह्मात्मनि समन्वय इत्युपसंहरति—**तस्मादिति**

भामतीव्याख्या

[य]नमेव क्षीरमेकमुपादेयदधिभावेन परिणमते । यथा निरवयवपरमाणुवादिनां क्षीरपरमाणुर्दधिपरमाणुभावेनेति । शेषमतिरोहि-

आनन्दगिरीयव्याख्या

[तस्मा]दिति । उक्तानुमानान्तराण्यनूद्य कालात्ययापदिष्टतामाह—**यदपीति** । न्यायशून्या श्रुतिरनुमानमपबाधितुमसमर्थेत्याशङ्क्याह—[अनित्यमि]तीति । दृश्चाकाशस्य न नित्यत्वमित्याह—**अनित्यमिति** । वस्तुतस्तु गुणाश्रयत्वमेव हेतुः । आकाशो जायते, महाभूतत्वात्, [बा]ह्येन्द्रियग्राह्यगुणाधारत्वाद्वा, पृथिव्यादिवदित्यनुमानमादिशब्दार्थः । आद्यस्य हेतोरन्यतरानैकान्तिकत्वं चोदयति—**आत्म-[नी]ति** । निर्गुणत्वश्रुतिमाश्रित्य परिहरति—**न तस्येति** । न चाकाशमनित्यविशेषगुणाधिकरणविभुभिन्नं, मेयत्वादिति तत्सिद्धिः । [आत्मनि] श्रोत्रग्राह्यविशेषगुणाधिकरणविभ्वन्यत्, मेयत्वादित्यपि प्रसङ्गात्, आत्मनि सर्वविशेषनिराकरणविविधश्रुतिविरोधाच्चेति भावः । [य]दुक्तं हेतवः साधका न भवन्तीत्याह—**विभुत्वादीनां चेति** । आकाशस्य नित्यत्वे नानुमानमस्तीत्युपपाद्य यच्चैतदुक्तं श-[ब्दाच्चे]ति तदनूद्य दूषयति—**यच्चैतदिति** । किमित्यमृतत्वश्रुतिरापेक्षिकी व्याख्यायते मुख्यार्थैव किं न स्यादित्याशङ्क्याह—[उत्पत्ती]ति । आकाशस्यानित्यत्वं चेदात्मनि तत्तुल्यत्वश्रुतिर्व्याहन्येतेत्याशङ्क्याह—**आकाशवदिति** । समत्वाभावे न क्वचिदुपमान-[मि]त्याशङ्क्याह—**यथेति** । 'स यथानन्तोऽयमाकाश एवमनन्त आत्मा' इति श्रुतेस्तर्हि कथमित्याशङ्क्याह—**एतेनेति** । अस्य-[न्तं व्या]ख्यातत्वेन न्यूनेनोपमानायोगादित्यर्थः । कथमाकाशस्य ब्रह्मणः सकाशान्न्यूनपरिमाणत्वमित्याशङ्क्य पूर्वोक्तयुक्त्या श्रुति-[माह]—**ज्यायानिति** । इतश्च ब्रह्मणि नोपमानोपपत्तिरित्याह—**न तस्येति** । इतोऽपि नित्यत्वमाकाशस्य नाशङ्कितव्यमि-[त्याह]—**अतोऽन्यदिति** । यदुक्तं स्याद्येकस्य ब्रह्मशब्दवदिति, तद्दूषयति—**तपसीति** । युक्तं तपसि ब्रह्मशब्दस्य गौणत्वं, तस्य ब्र-[ह्मत्वासंभवा]त्, आकाशे तु संभूतशब्दस्य ज्वलनादिवद्बाधकाभावादनुग्राहकसद्भावाच्च मुख्यत्वमेवेत्यर्थः । श्रुतियुक्तिसिद्धमुपसंह-[रति]—**तस्मादिति** । आकाशसृष्टिश्रुत्यनुसारेण तेजःसृष्टिश्रुतिनयनात्तयोरेकवाक्यतया प्रामाण्योपपत्तेराकाशकारणे ब्रह्मणि समन्वयः

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

२ अधिकरणम्

वायुर्नित्यो जायते वा छान्दोग्येऽजन्मकीर्तनात् ॥ सैषाऽनस्तमिता देवतेत्युक्तेर्न त्वजो ।
श्रुत्यन्तरोपसंहाराद्गौण्यनस्तमयश्रुतिः ॥ वियद्वज्जायते वायुः स्वरूपं ब्रह्म कारणम् ।२।

अतिदेशोऽयम् । एतेन वियद्व्याख्यानेन मातरिश्वापि वियदाश्रयो वायुर्व्याख्यातः । तत्रा-
योगं पक्षा रचयितव्याः । न वायुरुत्पद्यते छन्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः,
तु तैत्तिरीयाणामुत्पत्तिप्रकरण आम्नानम् 'आकाशाद्वायुः' (तै० २।१) इति पक्षान्तरम्,
श्रुत्योर्विप्रतिषेधे सति गौणी वायोरुत्पत्तिश्रुतिरसंभवादित्यपरोऽभिप्रायः । असंभवश्च
स्तमिता देवता यद्वायुः' (बृ० १।५।२२) इत्यस्तमयप्रतिषेधात्, अमृतत्वादिश्रवणाच्च ...
रोधाद्यावद्विकारं च विभागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्तः । अस्तमयप्रतिषेधो ...
विषय आपेक्षिकः । अग्न्यादीनामिव वायोरस्तमयाभावात् । कृतप्रतिविधानं चामृतत्वादि...
ननु वायोराकाशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिकरणमुभय...

रत्नप्रभाव्याख्या

॥ ७ ॥ एतेन मातरिश्वा व्याख्यातः । अतिदेशत्वान्न पृथक्संगत्याद्यपेक्षा । 'तत्तेजोऽसृजत' इति श्रुतेः ...
इति श्रुत्या विरोधोऽस्ति न वेति एकवाक्यत्वभावाभावाभ्यां संशये गौणपक्षपूर्वपक्षसिद्धान्तपक्षानतिदिशति ...
दिना । पूर्वत्र ह्याकाशानन्तर्यं तेजसः स्थापितं, तत्र वायुतेजसोस्तुल्यवदानन्तर्यं वायोरग्निरिति क्रमश्रुतेः ...
प्राथम्यभङ्गान्नैकवाक्यतेति पूर्वपक्षे गौणवाद्यभिप्रायमाह—ततश्चेति । अस्तमयप्रतिषेधो मुख्योत्पत्त्यभावे ...
श्चान्तरिक्षं चैतदमृतम्' इति तत्रैव लिङ्गस्याभ्यासः । 'वायुरेव व्यष्टिः समष्टिश्च' इति सर्वात्मत्वलिङ्गान्तरम् ...
संवर्गविद्यायां 'वायुर्ह्येवैतान्सर्वानग्न्यादीन्संहरति' इति शब्दमात्रेणैश्वर्यश्रवणं लिङ्गान्तरं प्राप्तम् । एतैर्लिङ्गैः ...
प्रतीतेरुत्पत्तिर्गौणीत्यविरोधः श्रुत्योरिति प्राप्ते प्रतिपिपादयिषितप्रतिज्ञाश्रुतेर्बलीयस्त्वात्तत्साधकानां तत्र ...
वयानां भूयस्त्वादुक्तविभक्तत्वादिलिङ्गानुग्रहाच्च मुख्यैव वायोरुत्पत्तिः, तथाचाकाशं वायुं न सृष्ट्वा तेजोऽस्राक्षीत् ...
क्यतया ब्रह्मणि समन्वयः । लिङ्गानि तूपास्यवायुस्तावकत्वादापेक्षिकतया व्याख्येयानीति मुख्यलिङ्गान्तर ...
दिना । कृतं प्रतिविधानमापेक्षिकत्वेन समाधानं यस्य तत्तथा । अधिकरणारम्भमाक्षिप्योक्तमभिप्राय ...

भामतीव्याख्या

तार्थम् ॥ ७ ॥ एतेन मातरिश्वा व्याख्यातः । यद्यप्यासे भूयस्त्वमर्थस्य भवति नाल्पत्वं दूरत एवो...
पवनस्य नित्यत्वप्रसङ्गः । 'वायुश्चान्तरिक्षमेतदमृतम्' इति द्वयोरमृतत्वमुक्त्वा पुनः पवनस्य विशेषेणाह—सैषाऽनस्तमिता देवता
यद्वायुरिति । तस्मादभ्यासाद्यापेक्षिकं वायोरमृतत्वमपि त्वौत्पत्तिकमेवेति प्राप्तम् । तदिदमुक्तं भाष्यकृता—अस्तमयप्रतिषेधादमृ-
मृतत्वादिश्रवणाच्चेति । चेन समुच्चयार्थेनाभ्यासो दर्शितः । एवं प्राप्त उच्यते—एकविज्ञानेन सर्वविज्ञान...

आनन्दगिरीयव्याख्या

सिध्यतीत्यधिकरणार्थं निगमयति—इति सिद्धमिति ॥ ७ ॥ वियदुत्पत्तिमुक्त्वा पवनोत्पत्तिमतिदिशन् तात्पर्यमाह ...
पूर्ववत्पादादिसंगतयो न पृथग्वक्तव्या भवन्तीत्यभिप्रेत्य तात्पर्यमाह—अतिदेशोऽयमिति । फलमेतदपि पूर्वोक्त...
यति—एतेनेति । वियदुत्पत्तिकथनानन्तरं तेजआद्यतिक्रम्य वायोरुत्पत्तिमत्त्वेन व्याख्याने कारणमाह—वियदा...
जोऽसृजत' इति श्रुतिः 'आकाशाद्वायुः' इति श्रुत्या विरुध्यते न वेत्येकवाक्यत्वासंभवसंभवाभ्यां संशये तत्...
न्यायत्वमाह—तत्रापीति । बहूक्त्वा वियदधिकरणेऽपि पक्षत्रयमस्तीति सूचितं, तदेव पक्षत्रयं संक्षिप्याह ...
वायुरिति । पूर्वपक्षं संक्षिपति—अस्ति त्विति । छान्दोग्ये तेजसः 'तत्तेजोऽसृजत' इति प्रथमजत्वश्रवणात् ...
काशाद्वायुः' इति वायोस्तेजःसकाशात्पूर्वजत्वश्रुतेरुभयोस्तदनुपपत्त्या मिथोविरोधे श्रुत्योरप्रामाण्यादाकाशद्वारा ...
न्वयासिद्धिरित्यर्थः । गौणवादिनोऽभिप्रायं संगृह्णाति—ततश्चेति । आकाशवद्वायोरकारणत्वानावात्कथं संभवः ...
श्चेति । दर्शितश्रुत्या वायुनित्यत्वमापेक्षिकमित्याशङ्क्याभ्यस्यमानत्वान्नैवमित्याह—अमृतत्वादीति । 'वायुः ...
आदिशब्देन 'वायुरेव व्यष्टिर्वायुः समष्टिः' इत्यभ्यासो गृह्यते । प्रतिज्ञाश्रुतेरनुमानाच्च पवनोत्पत्तिरित्याह ...
भावाद्याकाशद्वारा वायुकारणे ब्रह्मणि समन्वयः सिध्यतीति सिद्धान्तमाह—प्रतिज्ञेति । यत्तु वायोरस्तमय...
तत्राह—अस्तमयेति । अमृतत्वादिश्रवणं तर्हि कथं, तत्राह—कृतेति । प्रतिज्ञावाक्यार्थप्राधान्यात्तदुपपादक...
च बहुत्वान्मुख्यभूयस्त्वाभ्यां बलीयस्त्वादमृतत्वास्तमयनिषेधावापेक्षिकत्वेन नेयौ । अभ्यासस्तु...
गमयति । 'अप पुनर्मृत्युं जयति' इत्यपमृत्युजयस्यैव ... श्रवणादिति भावः । अधिकाशङ्कामाह ...

किमतिदेशेनासति विशेष इति । उच्यते—सत्यमेवमेतत् । तथापि मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्यर्थोऽयमतिदेशः क्रियते । संवर्गविद्यादिषु ह्युपास्यतया वायोर्महाभागत्वश्रवणात् । अस्तमयप्रतिषेधादिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति ॥ ८ ॥

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥




सद्ब्रह्म जायते नो वा कारणत्वेन जायते । यत्कारणं जायते तद्वियद्वाय्वादयो यथा ॥ १ ॥
असतोऽकारणत्वेन खादीनां सत उद्भवात् । व्याप्तेरजादिवाक्येन बाधात्सन्नैव जायते ॥ २ ॥

वियत्पवनयोरसंभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य ब्रह्मणोऽपि भवेत्कुतश्चिदुत्पत्तिरिति स्यात्कस्यचिन्मतिः । तथा विकारेभ्य एवाकाशादिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्याकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत । तामाशङ्कामपनेतुमिदं सूत्रम्—'असंभ-

रत्नप्रभाव्याख्या

ना । 'वायुर्ह्येवैतान्सर्वान्संवृङ्क्ते' इत्यादिशब्दमात्रं शङ्कामूलं नार्थ इति द्योतनार्थं मात्रपदम् । तामेव शङ्कामाह—संवर्गेति । वर्गिसमष्ट्युपास्तिः 'वायुं दिशां वत्सं वेद' इत्युपास्तिश्चादिशब्दार्थः ॥ ८ ॥ **असंभवस्तु सतोऽनुपपत्तेः ।** नावनन्तं महतः परं ध्रुवम्', 'न चास्य कश्चिज्जनिता' इत्यादि ब्रह्मानादित्वश्रुतीनां 'त्वं जातो भवसि विश्वतोमुखः' इत्युत्पत्तिश्रुत्या विरोधोऽस्ति न वेत्येकवाक्यत्वभावाभावाभ्यां संदेहेऽस्ति विरोध इति पूर्वपक्षे यथा वाय्वादेरमृतत्वादिकमुत्पत्तिश्रुत्यादापेक्षिकं तथा ब्रह्मानादित्वमापेक्षिकमिति दृष्टान्तसंगत्या एकदेशिपक्षं प्रापयति—**वियदिति** । ब्रह्म कुतश्चिज्जायते, भावत्वात्, आकाशवदित्यनुमानानुग्रहाज्जन्मश्रुतिर्बलीयसीत्याह—**तथेति** । न चानादिकारणाभावेनानवस्था बीजाङ्कुरवदित्युपपत्तेः । तथाच दीपाद्दीपवद्ब्रह्मान्तराद्ब्रह्मान्तरोत्पत्तिः, उत्पत्तिश्रुत्या चानादित्वश्रुतिर्नेयेत्यनाद्यनन्तब्रह्मसमन्वयासिद्धिरिति प्राप्ते मुख्यसिद्धान्तमाह—**तामिति** । ब्रह्म न जायते, कारणशून्यत्वात्, नरविषाणवत्, व्यतिरेकेण घटवदित्यनुमानानुग्रहाद्विपक्षे चाकारणककार्यवादप्रसङ्गाद्ब्रह्मानादित्वश्रुत्योर्बलीयस्त्व इति कारणत्वलिङ्गबाधाज्जन्मश्रुतिः कार्याभेदेन व्या-

भामतीव्याख्या

स्य प्राधान्यात्, तदुपपादनार्थत्वाच्च वाक्यान्तराणां, तेषामपि चाङ्कितप्रतिपादकानां मातरिश्वोत्पत्तिक्रमप्रतिपादकानां बहुत्वमुपाः, मुख्यभूयस्त्वाभ्याममूषां श्रुतीनां बलीयस्त्वात्, एतदनुरोधेनामृतत्वास्तमयप्रतिषेधावापेक्षिकत्वेन नेतव्याविति । भूयसीः श्रुतीर्द्वे अपि श्रुती शब्दमात्रमुक्ते ॥ ८ ॥ **असंभवस्तु सतोऽनुपपत्तेः ।** ननु 'न चास्य कश्चिज्जनिता' इत्यात्मनः सतोऽनुत्पत्तिश्रुतेः कथमुत्पत्त्याशङ्का । न च वचनमदृष्ट्वा पूर्वः पक्ष इति युक्तम्, अधीतवेदस्य ब्रह्मजिज्ञासाधिकारादर्शनानुपपत्तेरत आह—**वियत्पवनयोरिति** । यथाहि वियत्पवनयोरमृतत्वानस्तमयत्वश्रुती श्रुत्यन्तरविरोधादापेक्षिकत्वेन नीते । एवमकारणत्वश्रुतिरात्मनोऽपि विस्फुलिङ्गदृष्टान्तश्रुतिविरोधात्प्रमाणान्तरविरोधाच्चापेक्षिकत्वेन व्याख्यातव्या । न चात्मनः कारणत्वेऽनवस्था बीजाङ्कुरवदनादित्वात् कार्यकारणपरम्पराया इति भावः । **तथा विकारेभ्य इति ।** प्रमाणान्तरविरोधो दर्शितः । एवं प्राप्त उच्यते—सन्मात्रस्योत्पत्त्यसंभवः । कुतः **अनुपपत्तेः ।** सदेकस्वभावं हि ब्रह्म श्रूयते तदसति बाधके नान्यथयितव्यम् । उक्तमेतदि-

आनन्दगिरीयव्याख्या

मां शङ्कां दर्शयन्नुत्तरमाह—**उच्यत इति** । यदुक्तमसति विशेषे नातिदेशोऽर्थवानिति, तदङ्गीकरोति—**सत्यमिति** । पूर्वेण विकरणेन गतत्वादिदमधिकरणमनारभ्यमिति, तत्राह—**तथापीति** । शब्दानुरोधिन्यपि शङ्का न यस्यानुन मात्रशब्दार्थः । शब्दमात्रकृतामाशङ्कामेव दर्शयति—**संवर्गेति** । 'स यो वायुं दिशां वत्सं वेद' इत्यादिविद्यासंग्रहार्थमादिशब्दः । अग्निसमादिपदममृतत्वश्रवणमभ्यासं च संगृह्णाति । अमृतत्वादिश्रवणस्य कृतप्रतिविधित्वात्कथं शङ्कावकाशोऽस्तीति, तत्राह—**चिदिति** । प्रतिज्ञानुरोधादिना वायोर्नित्यत्वानुपपत्तेरुक्तत्वात्तत्कारणे ब्रह्मणि समन्वयः सिध्यतीत्युपपन्नं भवतीतिशब्दः ॥ ८ ॥ सविकल्पकारणत्वं पूर्वाधिकरणयोरुक्तम् । इदानीमग्निरेव विस्फुलिङ्गोऽर्थेयोत्पद्यते तथा ब्रह्मान्तराद्ब्रह्मोत्पद्यतामित्याशङ्क्याह—**असंभवस्त्विति** । 'न चास्य कश्चिज्जनिता' इत्यादिब्रह्मणोऽजत्वं प्रतिपादयतः समन्वयस्य 'त्वं जातो भवसि' इत्यादिश्रुत्या विरोधोऽस्त्युत तदसंभवासंभवाभ्यां संदेहे पूर्वपक्षमाह—**वियदिति** । दर्शितश्रुतिविरोधपरिहारद्वारा समन्वयदृढीकरणात्पादादिसंगतयः । श्रुतिप्रामाण्ये नित्यसिद्धे ब्रह्मणि समन्वयासिद्धिः । सिद्धान्ते तत्सिद्धिः । संभावनानानार्थसिद्धये यथानन्तरं माध्यमं कल्पनत्वाशङ्क्याह—**तथेति** । ब्रह्म कस्यचित्कार्यं, कारणत्वात्, आकाशवत् । न चात्र श्रुतिविरोधः, अनुमानेन श्रुत्या तथा विरोधात् । न चानवस्थानुगृहीता जन्मश्रुतिर्बलवती, कार्यकारणपरंपराया बीजाङ्कुरवदनादित्वात् परंपरया श्रुतिरेवं तथानुमानानुगृहीतत्वेनाविशेषादस्ति विरोधः श्रुत्योरिति भावः । ब्रह्म न कार्यं, कारणशून्यत्वात् । नरविषाणवदित्यनुमानानुगृहीतश्रुत्या ब्रह्मणो नित्यत्वाज्जन्मश्रुतेरौपाधिकजन्मविषयत्वेनाविरोधान्नित्यसिद्धे ब्रह्मणि समन्वयसिद्धिरिति सिद्धान्तमाह—**तामिति** ।

वस्तु' इति । न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः संभव उत्पत्तिराशङ्कितव्या अनुपपत्तेः । सन्मात्रं हि ब्रह्म । न तस्य सन्मात्रादेवोत्पत्तिः संभवति, प्रकृतिविकारभावानुपपत्तेः । नापि सद्विशेषाद्दृष्टविपर्ययात् । सामान्याद्धि विशेषा दृश्यन्ते मृदादेर्घटादयो न तु विशेषेभ्यः सामान्यम् । नाप्यसतो निरात्मकत्वात् । सञ्जायेत' ( छा० ८।७।१ ) इति चाक्षेपश्रवणात् । 'स कारणं करणाधिपाधिपो न च जनिता न चाधिपः' ( श्वे० ६।९ ) इति च ब्रह्मणो जनयितारं वारयति । वियत्पवनयोः उत्पत्तिः प्रदर्शिता न तु ब्रह्मणः सास्तीति वैषम्यम् । नच विकारेभ्यो विकारान्तरोत्पत्तिवत् ब्रह्मणोऽपि विकारत्वं भवितुमर्हतीति मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात् । या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्मेत्यविरोधः ॥ ९ ॥

## तेजोऽतस्तथाह्याह ॥ १० ॥

४ अधिकरणम्

ब्रह्मणो जायते वह्निर्वायोर्वा ब्रह्मसंयुतात् ॥ तत्तेजोऽसृजतेत्युक्तेर्ब्रह्मणो जायतेऽनलः ॥
वायोरग्निरिति श्रुत्या पूर्वश्रुत्येकवाक्यतः ॥ ब्रह्मणो वायुरूपत्वमापन्नाद्वह्निसंभवः ॥

---

रत्नप्रभाव्याख्या

ख्येयेत्यनाद्यनन्तब्रह्मसमन्वयसिद्धिरिति सिद्धान्तफलम् । नच हेत्वसिद्धिः, कारणस्यानिरूपणात् । ब्रह्मणः सन्मात्रमेव सामान्यं कारणं सद्विशेषो वा असद्वा । न त्रेधापीत्याह—**सन्मात्रं हीत्यादिना** । निमित्तमित्यनुदाहरणम् । वियत्पवनयोर्ब्रह्मणश्च विभक्तत्वाविभक्तत्वाभ्यां कारणभावाभावाभ्यां च वैषम्यं स्याप्रामाणिकानवस्था । तर्केणापि बाधमाह—**नच विकारेभ्य इत्यादिना** । कारणस्यानभ्युपगमे अनादिकारणानभ्युपगमेऽनवस्थाप्रसङ्गः, तदभ्युपगमे ब्रह्मवादप्रसङ्गः, कारणान्तरस्य प्रधानादेर्निरासादिति —**तेजोऽतस्तथाह्याह** । 'तत्तेजोऽसृजत' इति 'वायोरग्निः' इति च श्रुत्योर्विरोधोऽस्ति न वेति

भामतीव्याख्या

कारा: सत्त्वेनानुभूता अपि कतिपयकालकलातिक्रमे विनश्यन्तो दृश्यन्त इत्यनिर्वचनीयाः कल्यात्र च्छेदादिति । श्रुतेरनुभवाद्वा वर्तमानैकस्वभावत्वेन प्रसिद्धेस्तदिदमाह—**सन्मात्रं हि ब्रह्मेति** । एतदुक्तं भवति—अनिर्वचनीयं निर्वचनीयोपादानं युक्तं, न तु विपर्ययः । यथा रज्जूपादानः सर्पो न तु सर्पोपादाना रज्जुरिति । योर्निर्वचनीययोर्नोपादेयोपादानभावः, यथा रज्जुशुक्तिकयोरिति । नच निरधिष्ठानो विभ्रम इत्याह—नाप्यसतः अधिष्ठानभ्रमपरंपरानादितेत्याह—**मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गादिति** । पारमार्थिको हि रथया दुष्यति । समारोपस्तु विकारस्य न समारोपितोपादान इत्युपपादितं माध्यमिकमतनिषेधाधिकारे, भासदधिष्ठानविभ्रमसमर्थनाऽनादित्वेनोचितेत्यर्थः । अग्निविस्फुलिङ्गश्रुतिश्चौपाधिकरूपापेक्षया नेतव्या । दिक्कालोत्पत्तिविषयमिदमधिकरणं वर्णयांचक्रुस्तैः 'सतोऽनुपपत्तेः' इति क्लेशेन व्याख्येयम् । अविरोधः तव्या । अवादिवद्दिक्कालादीनामुत्पत्तिप्रतिपादकवाक्यस्यानवगमात् । तदास्तां तावत् ॥ ९ ॥ तेजोऽतः

आनन्दगिरीयव्याख्या

तत्र प्रतिज्ञाभागं विभजते—**न खल्विति** । कारणशून्यत्वं विशदीकुर्वन्प्रश्नपूर्वकं सौत्रं हेतुमादत्ते— हि कार्यत्वं ब्रुवता सन्मात्रं वा सद्विशेषो वा तस्यासद्वा कारणमिति वक्तव्यम् । नाद्य इत्याह— द्वितीय इत्याह—**नापीति** । दृष्टविपर्ययमेव साधयति—**सामान्याद्धिति** । न तृतीय इत्याह—**नापीति** न संभवतीत्याह—**कथमिति** । युक्त्या हेतुमुपपाद्य श्रुत्योपपादयति—**स कारणमिति** । यदुक्तं वियत्स्पर्शादि, तत्राह—**वियदिति** । विभक्तत्वमुत्पत्तावुपपत्तिः । ब्रह्मण्यपि तुल्यं विभक्तत्वमित्याशङ्क्य रिवति । यत्तु तथेत्यादावनुमानमुक्तं तद्दूषयति—**नचेति** । तस्य कार्यत्वं वदता मूलप्रकृतिरूपगन्तव्ये त्याह—**मूलेति** । नचानादित्वाद्बीजानवस्था, ब्रह्मणोऽपि कार्यत्वे तत्तदुपादाने परंपरायौगपद्ये प्रलयानवकाश बाधापत्तिरित्याशयेनाह—**या मूलेति** । एवं कार्यत्वानुमानस्याभासत्वाज्जन्मश्रुतेश्चौपाधिकविषयत्वाद् बलीयस्त्वादितरस्यास्तदनुरोधित्वादितरेतराविरोधाच्चेत्याद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयः संभवतीत्युक्तम् अध्यस्तस्याधिष्ठानत्वायोगाच्च कुतश्चिदपि ब्रह्मणो जन्मेत्युक्तम् । इदानीं वायोरपि तद्वि कार्यत्वेनाध्यस्त एव तज्जन्मेति प्रलयस्थाने प्रत्याह—**तेजोऽत इति** । तैत्तिरीये छान्दोग्ये च जायमानत्वेन श्रुतं तेजो

छान्दोग्ये सन्मूलत्वं तेजसः श्रावितं, तैत्तिरीयके तु वायुमूलत्वं, तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां प्राप्तं तावद्ब्रह्मयोनिकं तेज इति । कुतः । 'सदेव' इत्युपक्रम्य 'तत्तेजोऽसृजत' इत्युपदेशात् । सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य संभवात् । 'तज्जलान्' (छा० ३।१४।१) इति चाविशेषश्रुतेः 'एतस्माज्जायते प्राणः' (मुण्ड० २।१।३) इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात् । तैत्तिरीयके च 'स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किंच' (तै० ३।६।१) इत्यविशेषश्रवणात् । तस्मात् 'वायोरग्निः' इति क्रमोपदेशो द्रष्टव्यः । वायोरनन्तरमग्निः संभूत इति । एवं प्राप्त उच्यते—तेजोऽतो मातरिश्वनो जायत इति । कस्मात् । तथाह्याह—'वायोरग्निः' इति । अव्यवहिते हि तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे वायोरग्निरितीयं श्रुतिः कदर्थिता स्यात् । ननु क्रमार्थैषा भविष्यतीत्युक्तम् । नेति ब्रूमः—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१।१) इति पुरस्तात्संभवत्यपादानस्यात्मनः

## रत्नप्रभाव्याख्या

[...]सत्यसंभवेऽपि ब्रह्मवाय्वोः सामान्ययोस्तेजोरूपविशेषोपादानत्वसंभवात्तुल्यबलतयास्ति विरोध इति प्रत्युदाहरणेन पूर्व[...]ः । सर्वत्राध्यायसमाप्तेरेकवाक्यत्वासंभवासंभवौ संशयबीजम् । पूर्वपक्षे श्रुतीनां विरोधादप्रामाण्यं फलं, सिद्धान्ते प्रा[...]मित्युक्तं न विस्मर्तव्यम् । एवं पूर्वपक्षे कार्यमात्रस्य विवर्तत्वात्कल्पितस्य वायोस्तेजःकल्पनाधिष्ठानत्वायोगाद्ब्रह्मैव तेजस[...]दानं सर्वकार्याणां ब्रह्मैवोपादानमित्यर्थे श्रुतीनां भूयस्त्वाच्च तदनुरोधाद्वायोरिति क्रमार्था पञ्चमीत्यविरोध इत्येकदेशिसिद्धान्तं [...]ति—प्राप्तं तावद्ब्रह्मयोनिकं तेज इत्यादिना । श्रुतीनां विरोधमात्रोपन्यासेन पूर्वपक्षः, अपसिद्धान्तेनाविरोधात्तान[...]देशिपक्ष इति ज्ञेयम् । तदुभयमपि मुख्यसिद्धान्तापेक्षया पूर्वपक्षत्वेन व्यवह्रियते । सिद्धान्तयति—एवं प्राप्त इति । कद[...]ता । बाधितार्थेति यावत् । वायोस्तेजःप्रकृतित्वं पञ्चमीश्रुत्या निर्धारितं, नच कल्पितस्योपादानत्वासंभवः, अधिष्ठानत्वासंभ[...]पि मृदादिवत्परिणामित्वसंभवात्, स्वतस्तु ब्रह्मणश्छान्दोग्ये स्रष्टृत्वमात्रं श्रुतं नोपादानत्वम् । नच 'बहु स्याम्' इति कार्याभेद[...]लिङ्गादुपादानत्वसिद्धिः, लिङ्गाच्छ्रुतेर्बलीयस्त्वेन श्रुत्यविरोधेन लिङ्गस्य नेयत्वात् । नयनं चेत्थं वायोर्ब्रह्मानन्यत्वाद्वायुज[...]

## भामतीव्याख्या

[...]ग्निः' इत्यपादानपञ्चमी 'कारकविभक्तिरुपपदविभक्तेर्बलीयसी' इति नेयमानन्तर्यपरा युक्ता, तथापि बहुश्रुतिविरोधेन दुर्बलाप्युप[...]निरोधोचिता । ततश्चानन्तर्यदर्शनपरेयं वायोरग्निरिति श्रुतिः । नच साक्षाद्ब्रह्मजत्वसंभवे तदंशत्वेन तज्जत्वं परंपरयाश्रयितुं [...] । वाजपेयस्य पशुयूपवदिति प्राप्तम् । एवं प्राप्ते उच्यते—युक्तं पशुयागवाजपेययोरङ्गाङ्गिनोर्नानात्वात्तत्र साक्षाद्वाजपेयासंबन्धे

## आनन्दगिरीयव्याख्या

[...]युक्तमिति संशयस्य बीजं दर्शयन्पूर्वपक्षमाह—छान्दोग्य इति । तत्रेति शाखाद्वयोक्तिः । नच 'तत्तेजोऽसृजत' इति श्रुतेर्नि[...]विषयत्वात् 'वायोरग्निः' इति श्रुतेरुपादानविषयत्वादविप्रतिपत्तिः । 'बहु स्याम्' इति बहुभवनाशंसनलिङ्गेनोपादानत्वावगमादिति [...] । अत्रापि श्रुत्योर्विरोधनिराकरणद्वारा वायुभावमापन्ने ब्रह्मणि तेजोयोनौ समन्वयदृढीकरणात्पादादिसंगतयः । पूर्वपक्षे श्रुत्योरने[...]र्थेन विरोधादप्रामाण्ये तेजोहेतौ ब्रह्मणि समन्वयासिद्धिः । सिद्धान्ते तदेकवाक्यत्वेनाविरोधात्प्रामाण्ये तत्र तत्सिद्धिः । सत्यां [...]रसां विशेषकारणमन्तरेणान्यतरनिश्चयासिद्धिरिति शङ्कते—कुत इति । उपक्रान्तस्य सन्मात्रस्यैकमेवाद्वितीयमित्यवधारितद्विती[...]त्वात् 'तत्तेजोऽसृजत' इति वचनादुपादानादेवोपादेयस्याव्यतिरेकादुपादानत्वमेव तेजः प्रति ब्रह्मणो विवक्षितमित्याह—सदे[...] । वियत्पादेऽधिकरणे सर्वविज्ञानप्रतिज्ञानुगृहीतोत्पत्तिश्रुतेर्ब्रह्मजत्वं वियतो वर्णितं, तेनैव न्यायेन तेजसोऽपि ब्रह्मजत्वमेष्टव्यमित्याह [...]सर्वविज्ञानेति । इतश्च ब्रह्मजत्वं तेजसो युक्तमित्याह—तज्जलानिति चेति । अथर्वणश्रुत्या च तेजसो ब्रह्मजत्वसिद्धिरित्याह—[...]दिति । तथापि तैत्तिरीयश्रुत्यालोचनायां न ब्रह्मजत्वं तेजसः स्यादित्याह—तैत्तिरीयके चेति । ननु 'वायोरग्निः' इति श्रुते[...] तेजसो ब्रह्मजत्वेऽपि दर्शितश्रुतयो न विरुध्यन्तेऽन्यथा वायोरग्निरिति श्रुतिर्बाध्येत, तत्राह—तस्मादिति । यद्यपि वायोरग्नि[...]रित्यपञ्चमी कारकविभक्तिर्वायोरनन्तरमित्युपपदविभक्तेर्बलीयसी तथापि बहुश्रुतिविरोधाद्दुर्बलापि सैवोचितेति मत्वा क्रमोपदेशमेव [...]—वायोरिति । यदि पुनरित्थमस्याः श्रुतेरर्थो नाश्रीयते तर्हि विरुद्धार्थैव श्रुतिरियं पूर्वोक्तश्रुतिभिरिति पूर्वपक्षमनूद्य [...]—एवं प्राप्त इति । तत्र प्रश्नपूर्वकं हेतुमाह—कस्मादिति । हेतुमेव व्यतिरेकद्वारा विवृणोति—अव्यवहिते हीति । [...] पीडिता बाधितेति यावत् । तेजसो वायुयोनित्वं पञ्चमीश्रुत्या निर्धारितं, ब्रह्मयोनित्वं तु तस्य बहुभवनाशंसनलिङ्गाद्वचनम्, [...] लिङ्गं बाधित्वा वायुयोनित्वं मुख्यमादाय लिङ्गं परंपरया ब्रह्मयोनित्वविषयं विवक्षमाणेन न्यायेन ब्रह्मवायुभयानुगमने[...] भावः । पञ्चमीश्रुतेरुक्तां गतिं पूर्ववादी स्मारयति—नन्विति । न क्रमार्थत्वं पञ्चम्या युक्तं, पूर्वोत्तरवा[...]पादानार्थत्वप्रतीतेरिति परिहरति—नेतीति । उत्तरवाक्यमिदमित्युच्यते । इतश्चापादानार्थत्वमेव पञ्चम्या न क्रमार्थत्वमित्याह

पञ्चमीनिर्देशात्, तस्यैव च संभवतेरिहाधिकारात्, परस्तादपि च तदधिकारे 'पृथिव्या' (तै० २।१।१) इत्यपादानपञ्चमीदर्शनाद्वायोरग्निरित्यपादानपञ्चम्यैवैपेति गम्यते। … रूर्ध्वमग्निः संभूत इति कल्प्य उपपदार्थयोगः क्लृप्तस्तु कारकार्थयोगो वायोरग्निः संभूत … तस्मादेपा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति। नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसो … 'तत्तेजोऽसृजत' इति। न। तस्याः पारम्पर्यजत्वेऽप्यविरोधात्। यदापि ह्याकाशं वायुं … वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते, तदापि ब्रह्मजत्वं तेजसो न विरुध्यते। … श्रृतं तस्या दधि तस्या आमिक्षेत्यादि। दर्शयति च ब्रह्मणो विकारात्मनावस्थानं … स्वयमकुरुत' (तै० २।७।१) इति। तथाचेश्वरस्मरणं भवति—'बुद्धिर्ज्ञानमसंमोहः' (… १०।४) इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' (भ० गी० …) यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते तथापि सर्वस्य भावजातस्य … णाड्या चेश्वरवंश्यत्वात्। एतेनाक्रमसृष्टिवादिन्यः श्रुतयो व्याख्याताः। तासां सर्वत्र … क्रमवत्सृष्टिवादिनीनां त्वन्यथानुपपत्तेः। प्रतिज्ञापि सद्वंश्यत्वमात्रमपेक्षते नाव्यवहित … मित्यविरोधः ॥ १० ॥

---

रत्नप्रभाव्याख्या

स्यापि तेजसो ब्रह्मप्रकृतिकत्वमविरुद्धमिति सिद्धान्तग्रन्थाशयः। **इहाधिकारादिति**। वायोरग्निः संभूत … दित्यर्थः। तदधिकारे संभूत्यधिकारे। निरपेक्षकारकविभक्तेरुपपदसापेक्षविभक्त्यपेक्षया प्रबलत्वाच्च न … **अपिचेति**। ऊर्ध्वमनन्तरमिति वोपपदं विना पञ्चमीमात्रात्क्रमो न भातीति कल्प्य उपपदार्थयोगः। … तु निरपेक्षपञ्चम्या भाति। विशेषतोऽत्र प्रकरणादपादानार्थत्वं पञ्चम्याः क्लृप्तं क्लृप्तेन च कल्प्यं सति विरोधे … तिरित्यर्थः। पारम्पर्यजत्वमेवाह—**यदापीति**। तस्या धेनोः श्रृतं तप्तं क्षीरं साक्षात्कार्यं, दध्यादिकं तु … दधिसंसृष्टं कठिनक्षीरमामिक्षा। ब्रह्मणो वायुभावे मानमाह—**दर्शयति चेति**। पारम्पर्यजस्यापि … माह—**तथाचेति**। अन्तःकरणादिभ्यो जायमानबुद्ध्यादीनां मत्त एवेत्यवधारणं कथमित्याशङ्क्याह—**यद्यपि** … प्रनाड्या परंपरयेश्वरवंश्यत्वात्तज्जत्वात्परमकारणान्तरनिरासार्थमवधारणं युक्तमिति शेषः। एतत्पदार्थं … 'तज्जलान्' इत्याद्युक्तश्रुतीनां साक्षात्प्रनाड्या वा ब्रह्मजत्वमात्रेणोपपत्तेरित्यर्थः। अक्रमश्रुतीनां बलवत्क्रमश्रुति …

भामतीव्याख्या

क्लेशेन परंपराश्रयणम्। इह तु वायोर्ब्रह्मविकारस्यापि ब्रह्मणो वस्तुतोऽनन्यत्वाद्वायूपादानत्वे साक्षादेव ब्रह्मोपादान … त्वेबलीयस्त्वानुरोधेनोभयथोपपद्यमानाः श्रुतयः कांस्यभोजिन्यायेन नियम्यन्त इति युक्तमिति राद्धान्तः। 'पारम्पर्य … भेदकल्पनाभिप्रायं यतः पारमार्थिकाभेदमाह—**वायुभावापन्नं ब्रह्मेति। यथा तस्याः श्रृतम्** इति …

आनन्दगिरीयव्याख्या

—**अपिचेति**। प्रकरणादुपादानास्यापादानकारकाभिधायित्वं पञ्चम्याः सिद्धं परित्यज्य पदार्थान्तरयोगोऽसिद्धो … क्लृप्तकल्प्ययोर्मध्ये क्लृप्तस्यैव बलीयस्त्वादित्यर्थः। पञ्चमीश्रुतेरक्रमार्थत्वे फलितमाह—**तस्मादिति**। श्रुतिवशात्तेजसो … ब्रह्मजत्वमपि तस्यास्त्वयमतः श्रुत्योर्मिथो विरोधः स्यादिति शङ्कते—**नन्विति**। 'वायोरग्निः' इति साक्षात्तेजसो … जोऽसृजत' इति त्वाकाशवायुद्वारा तस्य ब्रह्मजत्वमिति विरोधसमाधिरिति समाधत्ते—**न। तस्या इति**। … **यदापीति**। साक्षात्पारम्पर्याभ्यां कारणत्वे दृष्टान्तमाह—**यथेति**। तस्या धेनोः श्रृतं तप्तं क्षीरं विवक्षितम्। … भेदः। तत्र क्षीरस्य दध्नि साक्षात्कारणत्वेऽपि गव्यं दधीति प्रयोगो दृष्टस्तथात्रापीत्यर्थः। तर्हि ब्रह्मणो वायुभावे … **माह—दर्शयति चेति**। पारम्पर्यजस्यापि तज्जत्वव्यपदेशयोग्यत्वे प्रमाणमाह—**तथाचेति**। अन्तःकरणादिजन्यबुद्ध्यादीनामवशोन्मानामुत्पत्तिदर्शनान्मत्त एवेत्यवधारणमयुक्तमित्याशङ्क्याह—**यद्यपीति। प्रणाड्या**। … श्यत्वात्सर्वांशो ब्रह्मत्वादिदमवधारणस्मरणमिति शेषः। सर्वस्येश्वरनादर्वाक्तथापीति वक्तव्यम्। पारम्पर्येण … श्रुतेरुक्तम्। इदानीम् 'इदं सर्वमसृजत' इत्यादिश्रुतेरपि पारम्पर्यविषयत्वमेषितव्यमित्याह—**एतेनेति**। … सामानुपपत्तिः, तत्राह—**तासामिति**। सर्वथा साक्षात्परम्परया वा सर्वस्य ब्रह्मजत्वमात्रेणाक्रमवादिनीनां … वशात्पारंपर्यमेवाश्रयणीयमित्यर्थः। क्रमश्रुतीनामेवाक्रमश्रुतिवशान्नयनं किं न स्यादित्याशङ्क्याह—**क्रमवदिति**। … मन्तरेणेति यावत्। न साक्षात्कारणविषयत्वमिति शेषः। अव्यवधानेन ब्रह्मजत्वाभावे कथं … अक्रमश्रुतीनां क्रमश्रुत्यनुसारित्वेन मिथो विरोधाभावाद्वेजसो विप्रत्ययनद्वारा कारणं ब्रह्मणि समन्वयः …

## आपः ॥ ११ ॥




ब्रह्मणोऽपां जन्म किं वा वह्नेर्नाग्नेर्जलोद्भवः ॥ विरुद्धत्वान्नीरजन्म ब्रह्मणः सर्वकारणात् ॥ १ ॥
अग्नेराप इति श्रुत्या ब्रह्मणो वह्न्युपाधिकात् ॥ अपां जनिर्विरोधस्तु सूक्ष्मयोर्नाग्निनीरयोः ॥ २ ॥

'अतस्तथाह्याह' इत्यनुवर्तते । आपोऽतस्तेजसो जायन्ते । कस्मात् । तथाह्याह—'तदपोऽसृजत' इति 'अग्नेरापः' इति च । सति वचने नास्ति संशयः । तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन्नपोऽन्तरियामित्याप इति सूत्रयांबभूव ॥ ११ ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥




ता अन्नमसृजन्तेति श्रुतमन्नं यवादिकम् ॥ पृथिवी वा यवाद्येव लोकेऽन्नत्वप्रसिद्धितः ॥ १ ॥
भूताधिकारात् कृष्णस्य रूपस्य श्रवणादपि ॥ तथाद्भ्यः पृथिवीत्युक्तेरन्नं पृथ्व्यत्र हेतुतः ॥ २ ॥

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' (छा० ६।२।४) इति श्रूयते । तत्र संशयः—किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं चौदनाद्युच्यते किं वा पृथिवीति । तत्र

---

### रत्नप्रभाव्याख्या

वायुद्वारा तेजःकारणे ब्रह्मणि समन्वय इति सिद्धम् ॥ १० ॥ **आपः** । अतिदेशोऽयं । तथा ह्याथर्वणे मुण्डकग्रन्थे 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति मन्त्रेऽपां ब्रह्मजत्वं श्रुतम् । 'अग्नेरापः' इति श्रुत्या तस्य विरोधोऽस्ति न वेति संदेहे तुल्यत्वादस्ति विरोध इति पूर्वपक्षे अपामग्निदाह्यत्वेन विरोधादग्निजत्वासंभवात्क्रमार्था पञ्चमीत्यविरोध इत्यधिकाशङ्कायामुक्ततेजोन्यायमतिदिश्य व्याचष्टे—**अत इति** । प्रत्यक्षविरोधे कथमग्निजत्वनिर्णयः, तत्राह—**सति वचन इति** । त्रिवृत्कृतयोरप्तेजसोर्विरोधेऽप्यग्नेराप इति वचनादतीन्द्रिययोस्तयोर्नास्ति विरोध इति निर्णीयत इत्यर्थः । न केवलं श्रुत्यविरोधज्ञानायायमतिदेशः किंतु पञ्चभूतोत्पत्तिक्रमनिर्णयार्थं चेत्याह—**तेजसस्त्विति** । ...तेजोभावापन्ने ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ॥ ११ ॥ **पृथिव्यधिकाररूपशब्दान्तरेभ्यः** । विषयमुक्त्वा अन्नशब्दमहाभूतप्रकरणाभ्यां संशयमाह—**ता इति** । अभ्यवहार्यं भक्ष्यम् । अत्र श्रुतौ यद्यन्नमोदनादिकं तदा 'अद्भ्यः पृथिवी'

### भामतीव्याख्या

...न न तु सर्वथा साम्येनेति सर्वमवदातम् ॥ १० ॥ **आपः** । निगदव्याख्यातेन भाष्येण व्याख्यातम् ॥ ११ ॥ **पृथिव्यधिकाररूपशब्दान्तरेभ्यः** । अन्नशब्दोऽयं व्युत्पत्त्या च प्रसिद्ध्या च व्रीहियवादौ तद्विकारे चौदने प्रवर्तते । श्रुतिश्च प्रकरणाद्बली-

### आनन्दगिरीयव्याख्या

...ति ॥ १० ॥ तेजसो वायुकार्यत्वमुक्त्वाऽनन्तरनिर्दिष्टानामपां तेजसो जन्मातिदेशेन निरूपयति—**आप इति** । वाक्यं हि सूत्रं न ...त्रं तस्कुतोऽस्य सूत्रत्वेत्याशङ्क्य सूत्रं पूरयति—**अत इति** । 'एतस्माज्जायते' इत्युपक्रम्य 'खं वायुर्ज्योतिरापः' इति 'अग्नेरापः' 'तदपोऽसृजत' इति च श्रूयते । तत्र किमापः सतो जायन्ते किंवा तेजस इति श्रुतिविप्रतिपत्तेः संदेहे सत्यपामग्निदाह्यत्वादग्नेरुत्प... ...त्, 'अग्नेरापः' 'तदपोऽसृजत' इति च श्रुती गौण्यावन्यथाथर्वणश्रुतिविरोधान्न ब्रह्मणि समन्वयसिद्धिरिति पूर्वपक्षे सिद्धान्तमाह—...ऽत इति । अपां कारणत्वे तेजसः श्रुतेऽपि प्रत्यक्षविरोधान्निश्चयासिद्धिरित्याशङ्क्याह—**सतीति** । त्रिवृत्कृतयोरप्तेजसोर्विरोधेऽपि ...त्रिवृत्कृतयोरतीन्द्रियत्वाद्विरोधाप्रतीतेर्वचने सति निश्चयोपपत्तिरित्यर्थः । संदेहाभावे विचारस्य निरवकाशत्वात्कथमिदं सूत्रमित्या-...ह—**तेजसस्त्विति** । महाभूतसर्गव्याख्याने प्रक्रान्ते क्रमप्राप्तानामपामतिक्रमो मा भूदित्यभिप्रेत्य प्रत्यक्षविरोधात् । 'आप ...य आसुः' इति च पूर्वसद्भावश्रवणादाथर्वणश्रुतेश्च 'अग्नेरापः' इत्याद्या श्रुतिर्गौणीति मन्दाशङ्कां निरसितुमिदं सूत्रम् । पूर्ववत्क्रम-...नुरोधेनाक्रमश्रुतेर्नेतव्यत्वात्पूर्वसद्भावश्रुतेश्च भूतसूक्ष्ममात्रविषयत्वेनाविरोधात्तेजोभावमापन्ने ब्रह्मण्यपां कारणे 'तदपोऽसृजत' इत्यादि-...समन्वयसिद्धौ न गौणार्थेति भावः । तत्र च तैत्तिरीयादिश्रुतेराथर्वणादिश्रुतेश्च मिथोविरोधनिराकरणद्वारा ब्रह्मण्येवादिकारणे ...समन्वयप्रतिपादनात्पादादिसंगतिस्तथैव फलभेदश्चेति द्रष्टव्यम् ॥ ११ ॥ तेजःकार्यत्वेनोक्तानामपां कार्यत्वेन 'ता अन्नमसृजन्त' इति ...न्नस्य पृथिवीत्वं साधयति—**पृथिवीति** । अधिकरणस्य विषयमाह—**ता इति** । अन्नशब्दान्महाभूतप्रकरणाच्च दर्शितश्रुतौ ...विचारप्रयोजकं संदेहमाह—**तत्रेति** । अभ्यवहार्यम् । भक्षणयोग्यमिति यावत् । अन्नकार्यविगानद्वारा कारणसमन्वये विगानं ...संभवति—**तत्र प्राप्तमिति** । 'ता अन्नमसृजन्त' इति श्रुतेः 'अद्भ्यः पृथिवी' इति श्रुतेश्च विरोधनिराकरणद्वारेण परम्परया ...ब्रह्मणि समन्वयप्रतिपादनादत्र पादादिसंगतिसौलभ्यमिति मन्तव्यम् । उक्तश्रुत्योरनेकवाक्यतया विरोधादप्रामाण्ये पूर्वपक्षे ...फलं, सिद्धान्ते त्वेकवाक्यत्वेनाविरोधात्प्रामाण्यं तत्सिद्धिः । प्रकरणादिना पृथिवीप्रतीतौ कथमन्नशब्देन व्रीह्यादि ग्राह्यमित्या-

प्राप्तं तावद्व्रीहियवाद्योदनादि वा परिग्रहीतव्यमिति । तत्र ह्यन्नशब्दः प्रसिद्धो लोके ।
पोऽप्येतमर्थमुपोद्बलयति । 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवतीति' । व्रीहि
हि सति वर्षणे बहु भवति न पृथिवीति । एवं प्राप्ते ब्रूमः—पृथिव्येवेयमन्नशब्देनाद्भ्यो
विवक्ष्यत इति । कस्मात् । अधिकाराद्रूपाच्छब्दान्तराच्च । अधिकारस्तावत् 'तत्तेजः
'तदपोऽसृजत' इति महाभूतविषयो वर्तते । तत्र क्रमप्राप्तां पृथिवीं महाभूतं विवक्षि
त्वा व्रीह्यादिपरिग्रहो न्याय्यः । तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते 'यत्कृष्णं
स्य' इति । न ह्योदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति । नापि व्रीह्यादीनाम् । ननु पृथिव्या
नैव कृष्णत्वनियमोऽस्ति पयःपाण्डुरस्याङ्गाररोहितस्य च क्षेत्रस्य दर्शनात् । नायं दोषः
हुल्यापेक्षत्वात् । भूयिष्ठं हि पृथिव्याः कृष्णं रूपं न तथा श्वेतरोहिते । पौराणिका अपि
वीछायां शर्वरीमुपदिशन्ति । सा च कृष्णाभासेत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते ।
न्तरमपि समानाधिकारमद्भ्यः पृथिवीति भवति । 'तद्यदपां शर आसीत्तत्समहन्यत सा
व्यभवत्'—(बृ० १।२।२) इति च । पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति—'पृथिव्या
ओषधीभ्योऽन्नम्' इति च । एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्री

---

रत्नप्रभाव्याख्या

इति श्रुत्या विरोधः, यदि पृथिवी तदा न विरोध इति फलं बोध्यम् । अप्पृथिव्योः कार्यकारणभावादधिकरणं
श्रुतिवृष्टिभवत्वलिङ्गाभ्यां पूर्वपक्षः । तदेव तत्रैवेति श्रुत्यर्थः । तथाच क्वचिदन्नं क्वचिदद्भ्यः पृथिवी ततोऽन्नं
मेकवाक्यतेति प्राप्ते सिद्धान्तयति—एवं प्राप्त इति । अधिकारः प्रकरणम् । रूपं लिङ्गम् । पयः क्षीरं तद्वत्पाण्डुरं
रवद्रोहितं रक्तम् । शब्दान्तरशब्दितं स्थानं व्याचष्टे—श्रुत्यन्तरमपीति । अथानन्तर्यं पृथिव्याः स्थानं
तेनाप्यन्नस्य पृथिवीत्वमित्यर्थः । तत्तत्र सृष्टिकाले यदपां शरः यो मण्डवद्घनीभाव आसीत्स एव समहन्यत
ऽभूत् साऽपां कठिना परिणतिः पृथिव्यभवदिति श्रुत्यर्थः । व्रीह्याद्यन्नसर्गः कस्मिन्स्थान इति विवक्षायां

भामतीव्याख्या

यती, सा च वाक्यशेषेणोपोद्बलिता 'यत्र क्वचन वर्षति' इत्येतेन तस्मादभ्यवहार्यं व्रीहियवाद्येवात्राद्भ्यो जातं
कार्ष्ण्यमपि हि संभवति कस्यचिददनीयस्य । नहि पृथिव्यपि कृष्णा, लोहितादिरूपाया अपि दर्शनात् । तत्र
पृथिवी पृथिव्या ओषधयः' इत्यादिना विरोध इति पूर्वः पक्षः । श्रुत्योर्विरोधे वस्तुनि विकल्पानुपपत्तेरन्यतरानुगुणत
तत्र किम् 'अद्भ्यः पृथिवी' इति पृथिवीशब्दोऽन्नपरतया नीयतामुत 'अन्नमसृजत' इत्यन्नशब्दः पृथिवीपरतयेति

आनन्दगिरीयव्याख्या

शङ्क्य श्रुतेस्ततो बलीयस्त्वादित्याह—तत्रहीति । अन्नशब्देन व्रीह्यादि ग्राह्यमित्यत्र लिङ्गमपि दर्शयति—
तस्मादिति । अद्भ्योऽन्नस्य सृष्टत्वादिति यावत् । तदेव । तत्रैवेत्यर्थः । वर्षणे सत्यन्नस्य बहुभवनं श्रुतमित्येतत्
व्रीह्यावृत्तिरित्याशङ्क्याह—व्रीहीति । श्रुतिलिङ्गाभ्यामन्नशब्दस्य प्रसिद्धार्थत्वे सिद्धे 'ता अन्नमसृजन्त' इत्यादि
पृथिवी' इत्यादिना विरोध इति पूर्वपक्षोपसंहार इतिशब्दार्थः । पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतार्य प्रतिज्ञाभागं व्याचष्टे—
श्रुतिलिङ्गाभ्यामन्नशब्दस्य व्रीह्यादिविषयत्वे दर्शिते पृथिवीविषयत्वं हेत्वभावादयुक्तमिति शङ्कते—कस्मादिति ।
विषयत्वे सूत्रोक्तं हेतुत्रयं विभज्यावतारयति—अधिकारादिति । अधिकारशब्दितं प्रकरणमादौ
प्रकरणस्य महाभूतविषयत्वेऽपि परम्परया व्रीह्यादिविषयत्वमन्नशब्दस्य किं न स्यादित्याशङ्क्य प्रबलप्रमाणं विना
मित्याह—तत्रेति । प्रकरणवल्लिङ्गमपि सिद्धान्ते साधकमस्तीत्याह—तथेति । लिङ्गस्यान्यथासिद्धिं शङ्कित्वा
कृष्णत्वनियमराहित्यं पृथिव्यामपि तुल्यमित्यसिद्धिं लिङ्गस्य चोदयति—नन्विति । पृथिवीप्रदेशानामकृष्णानां
नियमाभावादसंभवि लिङ्गमिति तन्निराकरोति—नायमिति । बाहुल्यमेव प्रकटयति—भूयिष्ठं हीति ।
श्रुतं तत्तस्य पृथिवीत्वं गमयतीत्यत्र पौराणिकसंमतिमाह—पौराणिका अपीति । प्रकरणलिङ्गे दर्शयित्वा
यति—श्रुत्यन्तरमपीति । समानाधिकारम् । महाभूतसृष्टिविषयत्वेन समानप्रकरणमिति यावत् । तत्रैव
तद्यदिति । तत्तत्र सृष्टिकाले यदपां यस्तासां शरो मण्डो घनीभावोऽभूदिति प्रकृतः शरो निरुच्यते । स हि
परिणतः । सोऽपां कठिनाकारपरिणामः पृथिव्यभवत् । विशेष्यपृथिव्यपेक्षया सेत्युक्तम् । चकारस्तु
तैत्तिरीयके तेज आरभ्य चतुर्थपर्यायपठितस्यैव व्रीह्यादिरूपत्वात्तृतीयपर्यायस्य पृथिवीविषयत्वाच्छान्दोग्येऽपि
स्थानमेव प्रकटयति—पृथिव्यास्त्विति । प्रमाणत्रयफलं निगमयति—एवमिति । अन्नशब्दश्रुत्या व्रीह्यादि

तिपत्तिः । प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते । वाक्यशेषोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवाद्भ्यः प्रभवत्वं सूचयतीति द्रष्टव्यम् । तस्मात्पृथिवीयमन्नशब्देति ॥ १२ ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥




व्योमाद्याः कार्यकर्तारो ब्रह्म वा तदुपाधिकम् ॥ व्योम्नो वायुर्वायुतोऽग्निरित्युक्तेः खादिकर्तृता ॥ १ ॥
ईश्वरोऽन्तर्यमयतीत्युक्तेर्व्योमाद्युपाधिकम् ॥ ब्रह्म वाय्वादिहेतुः स्यात्तेज आदीक्षणादपि ॥ २ ॥

किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान्सृजन्त्याहोस्वित्परमेश्वर एव तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति संदेहे सति प्राप्तं तावत्स्वयमेव सृजन्तीति । कुतः । 'आकाशाद्वायुर्वायोरग्निः' इत्यादिस्वातन्त्र्यश्रवणात् । नन्वचेतनानां स्वतन्त्राणां प्रवृत्तिः

---

### रत्नप्रभाव्याख्या

स्त्विति । पञ्चमीयम् । सृष्टिभवत्वलिङ्गसहितान्नश्रुतेः कथं प्रकरणलिङ्गस्थानैर्बाध इत्याशङ्क्याह—वाक्यशेषोऽपीति । प्रबलदुर्बलप्रमाणसंनिपाते बहूनां दुर्बलानामत्यन्तबाधाद्वरं प्रबलप्रमाणस्याल्पबाधेन कथंचिन्नयनमिति न्यायेन श्रुतिलिङ्गयोरन्नप्रनिष्ठत्वं बाधित्वान्नानन्नात्मकपृथिवीनिष्ठत्वं नीयते । ताभ्यामन्नमात्रग्रहे प्रकरणादीनां पृथिवीमात्रविषयाणामत्यन्तबाधापत्तेरिति भावः । अन्नस्य वृष्टिजत्वोक्तिद्वारा पृथिव्या अब्जजन्यत्वं सूच्यते । पृथिव्यब्जा, पृथिवीत्वात्, अन्नवदित्यनुमानादित्यक्षरार्थः । तैत्तिरिश्रुत्यनुसारेण छन्दोगश्रुतेर्नयनादविरुद्धो भूतसृष्टिश्रुतीनां ब्रह्मणि समन्वय इति सिद्धम् ॥ १२ ॥ संप्रति तानि भूतान्याश्रित्याश्रयाश्रयिभावसंगत्या तेषां स्वातन्त्र्यमाशङ्क्य निषेधति—तदभिध्यानादेव तु तल्लिङ्गात्सः । उक्तभूतान्याश्रित्य संशयपूर्वपक्षौ दर्शयति—किमिमानीत्यादिना । संशयबीजानुक्तौ पूर्वोत्तरपक्षयुक्त्यो बीजमिति ज्ञेयम् । नन्वत्र भूतानां किं स्वातन्त्र्येणोपादानत्वमाशङ्क्यते कर्तृत्वं वा । नाद्यः, 'रचनानुपपत्तेः' इत्यादिन्यायविरोधादिति शङ्कते—नन्विति । न द्वितीयः, अचेतनत्वादिति भावः । यथा मनुष्यादिशब्दैस्तत्तद्देहाभिमानिनो जीवा उच्यन्ते तथा 'आकाशाद्वायुः' इत्यादिश्रुतावाकाशादिशब्दैस्तत्तद्भूताभिमानिदेवता उच्यन्ते, तासां स्वकार्ये वाय्वादौ कर्तृत्वसंभवान्निरपेक्षनिमित्तत्वं पञ्चम्यर्थः । एवं 'तदात्मानं स्वयमकुरुत' इति श्रुतौ स्वयमिति विशेषणाद्ब्रह्मणोऽन्यानपेक्षसर्वकर्तृत्वसंभवान्निरपेक्षनिमित्तत्वं श्रुतम् । तथाच मिथोनिरपेक्षेश्वरभूत-

### भामतीव्याख्या

प्रकरणान्यायिककृष्णरूपानुरोधाच्च 'तद्यदपां शर आसीत्' इति च पुनः श्रुत्यनुरोधाच्च वाक्यशेषस्य नान्यथानुपपत्तेरन्नशब्दोऽप्यन्नेन पृथिव्यामिति राद्धान्तः ॥ १२ ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः । सृष्टिक्रमे भूतानामविरोध उक्तः । इदानीमाकाशादिनामधेयान्यो देवताः किं स्वतन्त्रा एवोत्तरोत्तरभूतसर्गे प्रवर्तन्त उत परमेश्वराधिष्ठिताः परतन्त्रा इति । तत्र 'आकाशाद्वायुर्वायोरग्निः' इति स्वकार्ये निरपेक्षाणां श्रुतेः स्वयंचेतनानां च चेतनान्तरापेक्षायां प्रमाणाभावात्, प्रस्तावस्य च लिङ्गस्य च पारम्पर्येणापि स्वकारणस्य ब्रह्मण उपपत्तेः, स्वतन्त्राणामेवाकाशादीनां वाय्वादिकारणत्वमिति जगतो ब्रह्मयोनित्वव्याघात इति प्राप्तम् । एवं प्राप्तेऽभिधीयते—'आकाशाद्वायुः' इत्यादय आकाशादीनां केवलमुपादानभावमाचक्षते, न पुनः स्वातन्त्र्येणाधिष्ठातृत्वम् । नच

### आनन्दगिरीयव्याख्या

प्रसिद्धिरपीति । लिङ्गानुगृहीता श्रुतिर्बलवती कुतो बाध्यतेत्याशङ्क्य स्वदुक्तं लिङ्गं सिद्धान्तानुकूलमित्याह—वाक्यशेषोऽपीति । प्रकरणादिभिर्यदा पृथिवी परिगृह्यते तदा श्रुतिलिङ्गयोर्नात्यन्तबाधः, स्वार्थापरित्यागेन तदाकारपरिणतायां पृथिव्यां प्रवृत्त्युपपत्तेः । श्रुतिलिङ्गाभ्यामन्नमात्रपरिग्रहे हेतुलिङ्गप्रकरणादीनामत्यन्तबाधः स्यात् । तेषां पृथिवीविषयत्वात्तदनुपादाने निरवकाशत्वात् । तत्र [illegible]मनुग्रहयोरिनरंतरविरोधेऽन्यतरस्यात्यन्तबाधेनान्यतरोपादानाद्वरमन्यतरस्याल्पबाधेनान्यतरोपादानमिति श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं [illegible] प्रकरणादिभिरन्नाकारपरिणता पृथिव्येव प्रतीतव्येति मन्वानः सिद्धान्तमुपसंहरति—तस्मादिति । तैत्तिरीयश्रुत्यनुसारेण [illegible]नयनात्तयोरविरोधादन्नभावमापन्ने पृथिवीकारणे ब्रह्मणि समन्वयोपपत्तिरिति निगमयितुमित्युक्तम् ॥ १२ ॥ पूर्वाधिकरणेषु भूतानां पूर्वस्मात्पूर्वस्मादुत्तरस्योत्तरस्य सृष्टिरुपदिष्टा । संप्रति भूतानां स्वकार्ये स्वातन्त्र्याद्ब्रह्मणः सर्वकारणत्वश्रुतिविरोधः स्यादित्याशङ्क्याह—तदभिध्यानादिति । विषयप्रदर्शनपूर्वकमाकाशादिशब्दानां चेतनाचेतनविषयत्वाभ्यां संदेहमुक्त्वा पूर्वपक्षं गृह्णाति—किमिमानीति । अत्र च भूतसृष्टत्वश्रुतेर्भूतस्रष्टृत्वश्रुतेश्च विरोधनिराकरणद्वारेण सर्वस्रष्टरि ब्रह्मणि समन्वयदृढीकरणात्पादादिसंगतयः । [illegible] श्रुत्योर्विरोधादनवस्थितत्वान्न तत्र ब्रह्मणि समन्वयः । सिद्धान्ते तु तयोरेकवाक्यतयाऽविरोधात्समन्वयसिद्धिः । 'आकाशादेव [illegible]' इत्येवकारश्रुत्या ब्रह्मणः स्वातन्त्र्ये समर्थिते भूतस्वातन्त्र्यमयुक्तमिति शङ्कते—कुत इति । मूलकारणत्वापेक्षया ब्रह्मणः [illegible]श्रवणमित्याशयवानाह—आकाशादिति । पूर्वपक्षमाक्षिपति—नन्विति । आकाशादिशब्दैराकाशाद्यभिमानिनां देवतानां

